ANDHRA UNIVERSITY SERIES NO. 7.

# SANGAMESWARAKRODUM

on

## JAGADISA'S SIDDHANTALAKSHANAM

by

**Gummaluri Sangameswara Sastri.**

*Lecturer in Nyaya,*

*Maharajah's Sanskrit College, Vizianagaram.*

Published from the income derived from the Maharajah of Bobbili Endowment for the furtherence of research in Sanskrit Learning).



WALTAIR

1933

 [Re. 1.

92. C. 31 ( 3--6--33) 500.

॥ श्रीः ॥

# ॥ सङ्गमेश्वरक्रोडम् ॥

(जगदीशतर्कालङ्कारविरचितस्य

सिद्धान्तलक्षणस्य क्रोडपत्रम्)

विजयनगरमहाराजसंस्कृतकलाशालायां

न्यायशास्त्रप्रधानाध्यापकेन

गुम्मलूर्युपनामक-सङ्गमेश्वरशास्त्रिणा

विरचितम् ।

१९३३

आन्ध्रविश्वकलापरिषदा

कुम्भघोणस्थश्रीविद्यामुद्राक्षरशालायां

मुद्रापयित्वा प्रकाशितम् ।

# प्रशस्तिः ॥



विदितचरमेवाद्यत्वे नव्यन्याये सत्स्वपि भवानन्दीयप्रभृतिषु प्राचीनग्रन्थेषु जगदीशतर्कालङ्कारगदाधरभट्टाचार्याभ्यां विरचितयोर्दीधितिव्याख्यानयोरतिसारवत्तया पण्डितगोष्ठ्यां प्राचुर्येण प्रचारः प्रवर्तते येन भवानन्दीयादिप्राचीनग्रन्थप्रचारो नष्टप्रायतामुपैति। तत्र जगदीशव्याख्यानस्य व्युत्पादकमिति गदाधरव्याख्यानस्य मोहकमिति च व्यवहारः पण्डितगोष्ठ्याम्। युक्तं चैतत्। जगदीशव्याख्याने सत्यपि विषयबाहुल्ये तेषां विषयाणां सूत्ररूपेण विन्यासेन सङ्ग्रहरूपतया तदध्येतॄणामध्यापकानां चाल्पाक्षरतोऽधिकार्थावगमनानुकूला व्युत्पत्तिरुपजायते। गदाधरव्याख्याने तु यावन्तो विषया निर्देक्ष्यन्ते तावतां विषयाणामतिविस्तृततया व्यासरूपेणोपपादनादध्येतॄणामध्यापकानां चापूर्वतया ग्रन्थाक्षरतस्समालोचनीयविषयाणां वैरल्यान्न तादृशं व्युत्पत्तिजनकत्वं परिदृश्यते। किन्तु प्रायस्सर्वेषामपि ग्रन्थविस्तरेणोपपादनात्सम्मोह उत्पद्यते। अत एव न्यायशास्त्रस्य प्रचुरप्रचारवति वङ्गदेशे यावान् जगदीशग्रन्थेष्वादरविशेषः परिदृश्यते न तावानुपलभ्यते गदाधरग्रन्थेषु। तादृशप्रौढतरस्य जगदीशव्याख्यानस्य कश्चन भागस्सिद्धान्तलक्षणमिति यदधिकृत्य ब्रह्मश्रीयुतगुम्मल्लयुपनामकमङ्गेश्वरशास्त्रिप्रवरैः पूर्वं क्रोडपत्रं सङ्गमेश्वरीयमिति संज्ञितं व्यरचि।

इदं तु क्रोडपत्रं सत्स्वपि बहुषु क्रोडपत्रेषु सर्वेषामग्रस्थानं लभत इति न रिक्तं वच इति गोचरीभवति तद्ग्रन्थपरिशीलकानाम्। अत्र क्रोडपत्रेऽपूर्वाणां विषयाणां बहूनां सत्त्वेन तेषामाविष्करणं ग्रन्थविस्तरमातनोतीत्येकांशस्य स्वरूपकीर्तनमात्रेण विरम्यते। अस्मिन्क्रोडपत्रे पूर्वैरनुद्घाटितपूर्वोऽपूर्वोऽयं विषयः यासौ सत्यामपि पत्रिकान्तरसरणिमनुसृत्य सम्बन्धविधयाऽनुगमसरण्यामपूर्वतया प्रकारविधयाऽनुगमसरणिः। इयं च सरणिरुपलभ्यमानपत्रेषु गोलोकभट्टाचार्यविरचितसामान्यनिरुक्तिविवेचिन्यामुप-

लभ्यते। सिद्धान्तलक्षणक्रोडपत्रेषु तु नेयं रीतिरुपलभ्यत इत्यपूर्वत्वेन परिगणनामर्हति। अनया दिशा अन्येऽप्यपूर्वा विषयाः स्वयमुन्नेया एतद्ग्रन्थपरिशीलकैः।

एतद्ग्रन्थकर्ता विशाखपट्टणमण्डलान्तर्गतबोब्बिलिपुरस्य नातिदूरवर्तिनि गङ्गनपाडुनामके कस्मिंश्चिदग्रहारे गुम्मलूर्युपनामकलक्ष्मीनारायणपण्डितात् धर्मपत्न्यां वेङ्कमाम्बानाम्न्यां ऐसवीयचतुःपञ्चाशदुत्तराष्टादशशततमे वर्षे उदपद्यत। अयं च पण्डितप्रवरो बाल्ये बोब्बिलिनगरराजास्थानपण्डितानां सुसुर्लोपनामकसीतारामशास्त्रिप्रवराणां निकटे प्रकरणग्रन्थानधीत्य समनन्तरं कृष्णामण्डलान्तर्गतगुम्मलूरिग्रामवास्तव्यानां श्रीपादरामशास्त्रिवर्याणां सविधे नवीनन्याये पञ्चवादग्रन्थानधीत्य स्वयं निष्णातोऽपि तावताऽसन्तुष्टो विजयनगरमहाराजसंस्थानपण्डितानां महिसूरूपनामकभीमाचार्यवर्याणां सकाशे पठितपूर्वेभ्योऽतिरिक्तान् सर्वानपि गदाधरभट्टाचार्यकृतानुमानखण्डग्रन्थानधीत्यानुमानदीधितिव्याख्यानग्रन्थान् साकल्येनाध्यगीष्टेत्यपूर्वां प्रतिष्ठामध्यगच्छत्। सति च वादप्रसङ्गेऽयं च पण्डितप्रवरः प्रतिपक्षिभूतं वाक्पतिमपि मूकीकर्तुं प्रभवतीति वचनं स्वभावोक्तिमापद्यते। अस्य पण्डितप्रवरस्याध्यापनरीतिरसाधारणा येनाद्यत्वेऽन्ध्रदेशवास्तव्यानां न्यायशास्त्रपण्डितानां शतेऽशीतिरेतत्पण्डितप्रवरशिष्यपरम्परायामन्तर्भूता एव दृश्यन्ते। अयं तु पण्डितप्रवर एवमध्यापनरीतिमाश्रित्य सप्तगोदावरतीरे काकरपर्तिनामके ग्रामे कंचन कालमुषित्वा बहूनां छात्राणां विद्याप्रदानमकरोत्। तत्र स्थितिसमय एव मथुरानाथीयपञ्चलक्षण्यामपूर्वं क्रोडपत्रं सङ्गमेश्वरीयाभिधानं विरचय्य प्रकटयामास। तस्य च क्रोडपत्रस्यायं महान्विशेषः यस्मिन्वादे विजिगीषूणामत्यन्तोपकारायैकविषयमधिकृत्य जल्पक्रमेण शतकोट्युपक्षिप्तम्। एवं सप्तगोदावरतीरवास्तव्यानां बहुधोपकुर्वति पण्डितप्रवरे तदाकलय्य विजयनगरसंस्थानाधीशाः इत्यादि बिरुदाङ्किताः श्रीश्रीश्रीमदानन्दगजपतिमहाराजाः

स्वकीयसंस्कृतपाठशालायामेतादृशपण्डितप्रकाण्डस्य स्थितिर्महते उपकाराय कल्पत इति समालोच्यामुं स्वस्यां पाठशालायां न्यायप्रधानाध्यापकपदव्यां नियोजयामासुरैसवीयचतुर्नवत्युत्तराष्टादशशततमे वर्षे (1894)। समनन्तरं च प्रकृतं सङ्गमेश्वरीयाख्यं जगदीशसिद्धान्तलक्षणक्रोडपत्रं विरचय्य महदुपाकरोत्पण्डितलोकस्य। एवं त्रयोदशोत्तरैकोनविंशतिवर्षपर्यन्तं तत्रैव पाठशालायामुषित्वा विपुलीकृत्य चान्ध्रदेशे न्यायशास्त्रे प्रचारं स्वोद्दिष्टे न्यायशास्त्रप्रचारे शिष्यपरम्परां प्रतिभूत्वेन नियोज्य विद्याप्रदानप्रवरगम्यानुत्तमाँल्लोकानलमकार्षीत्। एतत्पण्डितप्रवरस्य विजयनगरसमागमानन्तरमहमपि न्यायशास्त्रविषये तदीयशिष्यकोटिं प्रविश्य स्थितोऽस्मि। तदानीं न्यायशास्त्रविषयेऽदृष्टपूर्वः कश्चन पाण्डित्यविशेषोऽस्मिन्नस्तीत्यवगत्यैतावद्वक्तुमुत्सहते मदीयं चेतः। एवं तद्विरचितस्यास्य ग्रन्थस्य कंचित्कालं बहिरप्रकाशनं मनोवैकल्यमातनोत्पण्डितलोकस्य।

इदानीं तद्ग्रन्थप्रकाशने बद्धादरा आन्ध्रविश्वकलापरिषदमुं ग्रन्थं प्रकटय्य तन्मनोवैकल्यमपनोदयामासेति महदिदं प्रमोदस्थानं पण्डितलोकस्य। एवं बहुधोपकुर्वाणा आन्ध्रविश्वकलापरिषत्पण्डितलोकस्य कृतज्ञतापात्रं भूयादित्याशास्यते॥

एवं निवेदयिता

महामहोपाध्याय-ताता-सुब्बारायशास्त्री
संस्कृतकलाशालायां प्रधानाध्यापकः।

विजयनगरम्
६—४—१९३३.



ॐ

श्रीसङ्गमेश्वरशास्त्रिकृतं

# सिद्धान्तलक्षणक्रोडम् ॥

नत्वा सुन्दरमिन्दिरापतिमुमाकान्तं सदाराधितं
ध्यात्वा तार्किकमत्तवारणहरिश्रीरामभीमार्ययोः ।
सद्युक्तीर्जगदीशपण्डितकृते सद्व्याप्तिसिद्धान्तके
पत्रं प्रारभते बुधोत्तममुदे सत्सङ्गमेशः सुधीः ॥

'वह्नित्वावच्छिन्नस्येत्यारभ्य अव्याप्ति'रित्यंतग्रन्थेन तत्तद्व्यक्तित्वावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरनवच्छेदकत्वानुसरणबीजतया प्रतिपादिता जगदीशेन। अत्रेयमाशङ्क्यते । विषयितया रूपत्वविशिष्टाभावमादाय रूपवान् पृथिवीत्वादित्यादावव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वस्याऽवश्यं निवेशनीयतया तत एव स्वरूपसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य तत्तद्व्यक्तित्वावच्छिन्नाभावस्य वारणात्तमादायाव्याप्त्यभिधानमसङ्गतमिति चेत्; अत्रोच्यते । उक्तग्रन्थस्य वह्नित्वेन वह्निसाध्यकस्थलेऽव्याप्तिपरत्वे स्यादेवेयमनुपपत्तिः, न तथा, किंतु वह्नित्वाधिकरणत्वेन वह्निसाध्यकस्थल एवाऽव्याप्तिपरत्वम्, तत्र स्वरूपसंबन्धस्यैव साध्यतावच्छेदकताघटकसंबन्धत्वेन तत्संबन्धावच्छिन्नतद्व्यक्तित्वादिनिष्ठप्रतियोगितावच्छेदकताकाभावस्याऽपि लक्षणघटकत्वेन नाऽव्याप्त्यसंगतिरिति । अत एव 'वह्नित्वावच्छिन्नस्ये'त्यत्र अवच्छिन्नपदोपादानमपि साधु सङ्गच्छते । वह्नित्वस्य साध्यतावच्छेदकत्वेतु वह्नेरित्यस्यैव वक्तुमुचितत्वेन तद्वैयर्थ्यापातात् । वस्तुतस्तु कालिकेन महानसानुयोगिकसंयोगविशिष्टस्य समवायेन वह्नित्वविशिष्टस्य साध्यतायां धूमादिहेतौ समवायेन महानसीयसंयोगविशिष्टकालिकेन वह्नित्वविशिष्टस्याऽभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वस्थाने स्वानवच्छेदकसंबंधावच्छिन्नत्व, स्वसा-

मानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यत्वस्यावश्यं प्रतियोगितावच्छेदकतायां निवेशनीयतया तद्व्यक्तित्वनिष्ठावच्छेदकताया वह्नित्वनिष्ठसाध्यतावच्छेदकतासामानाधिकरण्यविरहेण साध्यतावच्छेदकताविशिष्टान्यतया तद्व्यक्तित्वावच्छिन्नाऽभावमादाय वह्नित्वेन वह्निसाध्यकेऽप्यव्याप्तिस्संभवतीति ध्येयम् ॥१॥

'न च तादृशावच्छेदकतापर्याप्त्यधिकरणत्वं न वह्नित्वस्येत्यदोष' इति जागदीशी। अयं भावः। पर्याप्तिसंबंधावच्छिन्नप्रतियोगितावच्छेदकतानिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदः साध्यतावच्छेदके विशेषणम्। तथा च वह्नित्वस्य महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वेऽपि तदवच्छेदकताया व्यासज्यवृत्तितया तत्पर्याप्त्यनवच्छेदकैकत्वावच्छिन्ने वह्नित्वे पर्याप्तिसंबंधेन तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदः घटपटोभयत्वपर्याप्त्यनवच्छेदकीभूतैकत्वावच्छिन्ने घटे पर्याप्तिसंबंधेन तादृशोभयत्वावच्छिन्नभेदवत् दुरपह्नव इति न वह्निमान् धूमादित्यादावव्याप्तिरिति। न च महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावतिव्याप्तिः। धूमाधिकरणे महानसीयवह्निभिन्नसामान्याभावस्य वह्निसामान्याभावस्य चासत्वेन महानसीयवह्निसामान्याभावस्य सत्वेऽपि तत्प्रतियोगितावच्छेदकताया महानसीयवह्निभिन्नत्ववह्नित्वगतद्वित्वावच्छिन्न एव पर्याप्ततया तत्पर्याप्त्यनवच्छेदकैकत्वावच्छिन्ने महानसीयवह्निभिन्नत्वे वह्नित्वे च तादृशावच्छेदकत्वावच्छिन्नभेदसत्वादिति वाच्यम्। अनुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छेदेनैव तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य निवेशात्। उक्तस्थलेऽनुमितिविधेयतावच्छेदकताया महानसीयवह्निभिन्नत्ववह्नित्वद्वित्वावच्छिन्न एव पर्याप्ततया तादृशरूपावच्छिन्ने धूमसमानाधिकरणमहानसीयवह्निभिन्नवह्न्यभावप्रतियोगितावच्छेदकतापर्याप्तमिति तादृशावच्छेदकत्वावच्छिन्नभेदविरहेणाऽतिव्याप्त्यभावादिति। अनुमितिविधेयतावच्छेदकता यादृशधर्मावच्छिन्ने पर्याप्तेत्यादेः हेतुमन्निष्ठाभावीयप्रतियोगितावच्छे-

दकत्वत्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकं यत्साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं तदवच्छिन्नावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः । तेन व्याप्तेः न विशिष्टैकार्थतानुपपत्तिः ॥२॥

'प्रत्येकं पर्याप्तिसंबंधेनाऽसतोऽवच्छेदकत्वस्योभयत्र पर्याप्तिसंबंधेन सत्वायोगा'दिति जागदीशी । अस्यायमर्थः । प्रत्येकवृत्तिधर्मावच्छेदेनोभयत्र विद्यमानाभावप्रतियोगिनोऽवच्छेदकत्वस्योभयत्वावच्छिन्नेऽपि पर्याप्तिसंबंधेन वृत्तित्वासंभवादिति । प्रतियोगितावच्छेदकतायाः पर्याप्तिसंबंधेनाऽपि व्याप्यवृत्तित्वादिति हृदयम् । नच व्यासज्यवृत्तेरवच्छेदकत्वस्य द्वित्वादिवदव्याप्यवृत्तित्वं युक्तम् । अन्यथा द्वित्वादीनामपि व्याप्यवृत्तित्वापत्तेरिति वाच्यम् । द्वित्वादीनामप्यव्याप्यवृत्तित्वासिद्धया दृष्टान्तवैषम्यात् । न च द्वित्वादेरपि व्याप्यवृत्तित्वे नायं द्वावित्याकारिका द्वित्वाधिकरण एव इदंत्वावच्छेदेन पर्याप्तिसंबंधावच्छिन्नप्रतियोगिताकद्वित्वाभावमवगाहमाना प्रतीतिः कथमुपपद्यत इति वाच्यम् । तादृशप्रतीतौ इदंत्वावच्छिन्नपर्याप्तिसंबंधेन द्वित्वाभावस्यैव द्वित्वाधिकरणे भानोपगमात् । द्वित्वादेः शुद्धाया द्वित्वावच्छिन्नत्वविशेषिताया वा पर्याप्तेरेव संबंधतया इदंत्वावच्छिन्नपर्याप्तिरूपव्यधिकरणसंबंधेन द्वित्वाभावस्य केवलान्वयितया तादृशप्रतीत्युपपत्तेः। न च द्वित्वाधिकरणे इदंत्वावच्छेदेन पर्याप्तिसंबंधेन द्वित्वाभावानभ्युपगमे पर्याप्तिसंबंधेन द्वित्वप्रकारिकायाः अयं द्वावित्याकारकप्रतीतेः प्रकारतावच्छेदकसंबंधेन प्रकाराभावघटितं भ्रमत्वं कथमुपपद्यत इति वाच्यम् । तादृशप्रतीतौ धर्मितावच्छेदकीभूतेदंत्वावच्छिन्नपर्याप्तेरेव द्वित्वस्य संबंधतया भानात् । प्रकारतावच्छेदकीभूतेदंत्वावच्छिन्नपर्याप्तिरूपव्यधिकरणसंबंधेन प्रकारीभूतद्वित्वाभावस्य केवलान्वयितया तादृशप्रतीतेर्भ्रमत्वोपपत्तेः । द्वित्वाधिकरणे शुद्धपर्याप्तिसंबंधेन द्वित्वाभावानभ्युपगमेऽपि क्षतिविरहात् । न चेदंत्वावच्छेद्यपर्याप्त्यप्रसिद्धिः ; इदं द्रव्यमित्याकारिकाया इदंत्वावच्छेद्यपर्याप्तिसंबंधेन द्रव्यत्वप्रकारिकायाः प्रतीतेस्तत्सिद्धेरिति । न च तत्र

वाय एव संसर्गोऽस्त्विति वाच्यम्। इदं द्रव्यं, इदं द्रव्यत्ववत्, इति प्रतीत्योर्वैलक्षण्यनिर्वाहाय प्राथमिकप्रतीतौ पर्याप्तेः द्वितीयप्रतीतौ समवायस्य च संसर्गताया अवश्याभ्युपेयत्वात्। इदमत्रावधेयं। अव्यासज्यवृत्तिद्रव्यत्वादीनामपि पर्याप्त्यभ्युपगन्तृप्राचीनमताभिप्रायेणैतद्दूषणम्। वस्तुतस्तु द्रव्यं, द्रव्यत्ववदिति प्रतीत्योः समवायसंसर्गकत्वतत्प्रकारकत्वाभ्यामेव वैलक्षण्योपपत्तेः अव्यासज्यवृत्तिद्रव्यात्वादीनां पर्याप्तौ मानाभावात् इदंत्वावच्छेद्यपर्याप्त्यप्रसिद्ध्या अयं न द्वावित्याकारकप्रतीतौ अभावप्रतियोगितावच्छेदकतयाऽयं द्वाविति प्रतीतौ द्वित्वसंसर्गतया च तद्भानाऽसंभवेन शुद्धपर्याप्तिसंबंधस्य प्रथमप्रतीतौ अभावप्रतियोगितावच्छेदकतया द्वितीयप्रतीतौ द्वित्वादिसंबंधतया च भानस्य अवश्याऽभ्युपेयत्वात्। प्रथमप्रतीतेः प्रमात्वानुरोधेन द्वितीयप्रतीतेर्भ्रमत्वानुरोधेन च द्वित्वाधिकरणेऽपि इदंत्वावच्छेदेन पर्याप्तिसंबंधेन द्वित्वाभावोऽवश्यमभ्युपगन्तव्यः। तथा च व्यासज्यवृत्तिद्वित्वादीनां अव्याप्यवृत्तित्वे व्यासज्यवृत्तित्वाऽविशेषेण प्रतियोगितावच्छेदकताया अपि अव्याप्यवृत्तित्वसिद्धेर्निष्प्रत्यूहत्वात् द्वित्वावच्छेदेन महानसीयवह्न्यभावप्रतियोगितावच्छेदकतावति तत्पर्याप्त्यनवच्छेदकीभूतैकत्वावच्छेदेन ताद्दशावच्छेदकत्वावच्छिन्नभेदसत्वे बाधकाऽभावात्। साध्यतावच्छेदकतापर्याप्त्यवच्छेदकरूपावच्छेदेन ताद्दशावच्छेदकत्वावच्छिन्नभेदविवक्षणे न वह्नित्वस्य धूमव्यापकतावच्छेदकत्वानुपपत्तिः। अत एव दीधितिकाराणां 'अवच्छेदकत्वं चेह तत्पर्याप्त्यधिकरणत्वमि'त्यादिना पर्याप्तिनिवेशेन वह्नित्वस्य धूमव्यापकतावच्छेदकत्वोपपादनमपि साधु संगच्छत इति ॥३॥

'तथाऽपि साध्यतावच्छेदकतदितरोभयावच्छेद्यभिन्नाया एव प्रतियोगिताया अनवच्छेदकत्वस्य विवक्षितत्वाददोष' इति जागदीशी। अथ किमिदं साध्यतावच्छेदकतादितरोभयानवच्छिन्नत्वम्। न तावत्ताद्दशोभयनिष्ठावच्छेदकत्वानिरूपकत्वं, महानसीयत्ववह्नित्वनिष्ठयोरभावप्रतियोगितावच्छेदकत्वयोः सावच्छिन्नत्वनिरवच्छिन्नत्वाभ्यां स्वस्यावच्छेदकसंबंध-

भेदेन च भिन्नत्वात् तयोर्मध्ये कस्यापि साध्यतावच्छेदकतदितरोभयनिष्ठत्वाभावेन तादृशी या जातित्वाद्यवच्छिन्नजातिमदभावीयप्रतियोगितावच्छेदकता तदनिरूपकत्वस्य महानसीयवह्न्यभावप्रतियोगितायामपि सत्वेन तदवारणात्। नापि साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वाभावतदितरनिष्ठावच्छेदकतानिरूपकत्वाभावोभयवत्वमपि तत्। घटाद्यभावीयप्रतियोगितायां साध्यतावच्छेदकेतरघटत्वादिनिष्ठावच्छेदकतानिरूपकत्वसत्वेन तादृशाभावद्वयवत्प्रतियोगित्वाऽप्रसिद्ध्या असंभवापातात्। नापि साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वतदितरनिष्ठावच्छेदकतानिरूपकत्वोभयाभावस्साध्यतावच्छेदकतदितरेत्यादेरर्थः। घटाभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वाभावेन निरुक्तोभयाभावसत्वात् न तादृशप्रतियोगित्वाप्रसिद्धिः। महानसीयवह्न्यभावप्रतियोगितायां निरुक्तोभयसत्वेन तद्वारणं चेति युक्तम्। नृसिंहकारावच्छेदकत्वाभ्युपगन्तृमते महानसीयवह्न्यभावप्रतियोगितावच्छेदकताया एकतया प्रतियोगितायां तन्निरूपकत्वस्याप्यभेदेन महानसीयवह्न्यभावप्रतियोगिताया अपि निरुक्तोभयाभाववत्तया तामादायाऽव्याप्तेर्दुर्वारतापत्तेरिति चेत्; मैवम्। साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वाभाव, तदतिरिक्तनिष्ठावच्छेदकतानिरूपकत्वाभाव, एतदुभयान्यतरवत्वस्यैव साध्यतावच्छेदकतदितरेत्यादेरर्थत्वात्। घटाभावप्रतियोगितायां निरुक्तान्यतरान्तर्गतसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वाभावसत्वेन न तादृशप्रतियोगित्वाप्रसिद्धिः। महानसीयवह्न्यभावप्रतियोगितायां निरुक्तान्यतरमध्ये कस्याप्यभावेन न तमादायाऽव्याप्तिर्वा। वस्तुतस्तु सामानाधिकरण्यसंबंधेन साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वविशिष्टं यत्तदितरनिष्ठावच्छेदकतानिरूपकत्वं तदभावः प्रतियोगिताविशेषणतयाऽभिप्रेत इति सारम् ॥४॥

'तदितरपदेन स्वानवच्छिन्नप्रकारतावच्छेदकस्य विवक्षितत्वा'दिति जागदीशी। अत्र स्वपदं साध्यतावच्छेदकपरं, तथाच साध्यतावच्छेदक-

साध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपकप्रकारतावच्छेदकैतदुभयानवच्छिन्नत्वं प्रतियोगिताविशेषणमित्याशयः । न च प्रमेयसाध्यतावच्छेदककस्थले जगतएव साध्यतावच्छेदकत्वेन तदनवच्छिन्नप्रकारत्वाप्रसिद्धिः। निरवच्छिन्नप्रकारतायाः प्रसिद्धावपि तदवच्छेदकाप्रसिद्ध्या अव्याप्तितादवस्थ्यमिति। यदि च साध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वं निवेश्य घटवानिति ज्ञानीयाविशेषितघटत्वावच्छिन्नप्रकारतायाः साध्यतावच्छेदकतावच्छेदकप्रमेयत्वेन साध्यतावच्छेदकानवच्छिन्नतया तदवच्छेदकघटत्वादेः प्रसिद्ध्या नाऽव्याप्तिरित्युच्यते, तदा घटाद्यभावप्रतियोगितायामपि तादृशप्रकारतावच्छेदकघटत्वावच्छिन्नत्वसाध्यतावच्छेदकान्तर्गतघटत्वावच्छिन्नत्वयोस्सत्वेन निरुक्तोभयानवच्छिन्नप्रतियोगित्वाऽप्रसिद्धिरिति वाच्यम्। साध्यतावच्छेदकतानिष्ठावच्छेदकतानिरूपकत्वपदेन साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकतानिरूपकत्वस्य विवक्षितत्वात्। अविशेषितघटत्वाद्यवच्छिन्नप्रतियोगितायां प्रमेयत्वरूप साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकतानिरूपकत्वाभावेन निरुक्तोभयानवच्छिन्नत्वस्य सत्वात् तादृशप्रतियोगित्वाप्रसिद्ध्या न प्रमेयसाध्यतावच्छेदकस्थलेऽव्याप्तिः । इयं च निरुक्तिः विशिष्टसाध्यतावच्छेदककस्थले, शुद्धसाध्यतावच्छेदककस्थले तु यथाश्रुतोभयानवच्छिन्नत्वमेव निवेशनीयम् । तेनाविशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकाप्रसिद्धावपि न क्षतिः । अथैवमपि जातिमद्वान् भावत्वादित्यादावतिव्याप्तिः, जातिमदभावप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकजातित्वावच्छिन्नावच्छेदकताकत्व, साध्यतावच्छेदकतावच्छेदकजातित्वावच्छिन्नावच्छेदकताकान्य घटवानित्याकारकज्ञानीय प्रकारतावच्छेदक घटत्वावच्छिन्नत्वयोः सत्वात्तस्या लक्षणाघटकत्वात् प्रतियोगित्वान्तरानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् । न च जातित्वेन जात्यवच्छिन्नप्रतियोगितायाःलक्षणाघटकत्वेऽपि स्वरूपतस्तत्तज्जात्यवच्छिन्नप्रतियोगितायाः

जातित्वावच्छिन्नावच्छेदकताकत्वाभावेन निरुक्तोभयाभाववत्तया तन्नि-रूपितनिरवच्छिन्नावच्छेदकत्वं साध्यतावच्छेदकीभूतनिखिलजातीनामस्तीति नातिव्याप्तिरिति वाच्यम् । एवमपि दण्डिमान् प्रमेयत्वादित्यादौ सखण्डसाध्यतावच्छेदकके व्यभिचारिणि दण्डिसामान्याभावीयप्रतियोगितायाः दण्डत्वेन दण्डानवच्छिन्नप्रमेयवत्वानिति ज्ञानीयप्रकारतायां प्रमेयत्वेनावच्छेदकीभूतदण्डावच्छिन्नत्वदण्डत्वावच्छिन्नावच्छेदकताकत्वयोस्सत्वेन निरुक्तोभयाभावविरहेण तस्या लक्षणाघटकत्वात् तादृशघटाद्यवच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वादतिव्याप्तिः । यदि च तत्वमात्रेण तद्दण्डावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकतावच्छेदकदण्डत्वावच्छेदकताकत्वविरहेण निरुक्तोभयाभावशालितया लक्षणघटकत्वेन साध्यतावच्छेदकीभूतसकलदण्डव्यक्तीनां तदवच्छेदकत्वेन नातिव्याप्तिरित्युच्यते तदा घटसमवेतत्ववैशिष्ट्यमात्रेण जात्यवच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकतावच्छेदकजातित्वावच्छिन्नावच्छेदकताकत्वविरहेण लक्षणघटकतया तन्निरूपितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकजातित्वावच्छिन्नत्वविरहेण यद्रूपेण साध्यतावच्छेदकत्वं तत्तादितरोभयानवच्छिन्नत्वेन तामादाय जातिमद्वान् घटत्वादित्यादावव्याप्तिवारणाय यद्रूपेणेत्यादेः साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य प्रतियोगितावच्छेदकताविशेषणत्वाभिप्रायवर्णनस्यावश्यकतया तत्वमात्रेण दण्डावच्छिन्नप्रतियोगिताया अपि साध्यतावच्छेदकतावच्छेदकेतरतत्वावच्छिन्नत्वेन लक्षणाघटकतया तामादायातिव्याप्तिवारणासंभवात् । न च घटाद्यभावप्रतियोगितावच्छेदकतायाःसाध्यतावच्छेदकतावच्छेदकसंयोगसंबंधावच्छिन्नत्वाभावेन घटवदभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकेतरघटत्वावच्छिन्नत्वेन लक्षणघटकतया तथाविधावच्छेदकत्वाप्रसिद्ध्यैव नोक्तस्थलेऽतिव्याप्तिरिति वाच्यम् । दण्डिमान् तद्दण्डिसंयोगादित्यादिसद्धेतौ दण्डिसामान्याभावीय प्रतियोगितायाः हेतुमन्निष्ठाभावीयत्वाभावेन घटतद्

दभावयोः प्रतियोगितयोः भवदुक्तरीत्या लक्षणघटकतया तथाविधप्रतियोगितावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वपदेन साध्यतावच्छेदकतावच्छेदकसंबंधातिरिक्तसंबंधावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकताभिन्नत्वस्यैव विवक्षणीयत्वेन घटाद्यभावप्रतियोगितावच्छेदकतायास्साध्यतावच्छेदकतावच्छेदकसंबंधावच्छिन्नत्वाभावेपि निरुक्तावच्छेदकताभिन्नत्वस्य सत्वात् निरवच्छिन्नत्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वाच्च तस्याः प्रसिद्धतया तदप्रसिद्ध्याऽतिव्याप्तिवारणासंभवात् इति, मैवम् । साध्यतावच्छेदकतावच्छेदक रूपावच्छिन्नावच्छेदकतानिरूपकत्व साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकत्वानिरूपकप्रकारतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकतानिरूपकत्वोभयाभावस्यैव प्रतियोगिताविशेषणतया साध्यतावच्छेदकतदितरेत्यादिना विवक्षितत्वात् । तथा च दण्डिमान् प्रमेयत्वादित्यादौ दण्डिसामान्याभावीयप्रतियोगितायाः दण्डत्वावच्छिन्नावच्छेदकत्वानिरूपक प्रमेयवद्वानिति ज्ञानीयप्रकारतायां प्रमेयत्वेनावच्छेदकीभूतदण्डावच्छिन्नत्वेपि तादृशप्रकारतावच्छेदकतावच्छेदकप्रमेयत्वावच्छिन्नावच्छेदकताकत्वाभावेन निरुक्तोभयाभावशालितया तामादायैव नातिव्याप्तिः, न चैवं जातिमद्वान् घटत्वादित्यादावव्याप्तिः, । हेत्वधिकरणे घटे वर्तमानो यो जातिमत्पटाभावः तदीयप्रतियोगितायां जातित्वावच्छिन्नावच्छेदकत्वानिरूपकप्रकारतावच्छेदकतावच्छेदकधर्मावच्छिन्नावच्छेदकतानिरूपकत्वविरहेण निरुक्तोभयाभाववत्तया साध्यतावच्छेदकजातेस्तदवच्छेदकत्वादिति वाच्यम् । साध्यतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छिन्नावच्छेदकत्वानिरूपकप्रकारतावच्छेदकतावच्छेदकरूपावच्छिन्नावच्छेदकतास्थाने तादृशरूपविशिष्टावच्छेदकताया विवक्षितत्वात् । रूपवैशिष्ट्यं चावच्छेदकतायां स्वावच्छिन्नत्व निरवच्छिन्नत्वसहितस्वसामानाधिकरण्यान्यतरसंबंधेन । तथा च जातित्वविशिष्टानवच्छिन्नपटत्वविशिष्टवानितिज्ञानीयप्रकारतावच्छेदकतावच्छेदकं यत्पटत्वत्वं

निरवच्छिन्नत्वसहितस्वसामानाधिकरण्यात्मकनिरुक्तान्यतरसंबंधेन तद्विशि-ष्टं यत्पटत्वनिष्ठनिरवच्छिन्नावच्छेदकत्वं तन्निरूपकत्वजातित्वावच्छिन्ना-वच्छेदकानिरूपकत्वयोर्द्वयोरपि सत्वेन निरुक्तोभयाभावासत्वात्तामादाय जातिसाध्यतावच्छेदकघटत्वहेतावव्याप्त्यनवकाशात् । ननु महानसीय-वह्निमान् धूमादित्यादावतिव्याप्तिः, महानसीयवह्न्याद्यभावीयप्रतियोगिता-यां साध्यतावच्छेदकतावच्छेदकमहानसीयत्वत्वाद्यवच्छिन्नावच्छेदकत्वानि-रूपकत्वस्य तद्रूपावच्छिन्नावच्छेदकत्वानिरूपकवह्नित्वविशिष्टवानिति ज्ञा-नीयप्रकारतावच्छेदकतावच्छेदकं यद्वह्नित्वत्वं निरवच्छिन्नत्वसाहितस्वसामा-नाधिकरण्यसंबंधेन तद्विशिष्टा या वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकता तन्निरूपकत्वस्य च सत्वेन निरुक्तोभयाभावसत्वात् तस्या लक्षणघट-कत्वादितिचेत्; अत्र केचित्; साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनु-योगितावच्छेदकरूपविशिष्टरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकत्वा-निरूपकत्वं साध्यतावच्छेदकतादितरेत्यादेरर्थः, रूपे रूपवैशिष्ट्यं च स्वसा-मानाधिकरण्यस्वाभाववद्वृत्तित्वोभयसंबंधेन, इत्थं च साध्यतावच्छेदकता-प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यद्वह्नित्वगतैकत्वं निरुक्तोभयसं-बंधेन तद्विशिष्टं यन्महानसीयत्ववह्नित्वोभयगतद्वित्वं, तदवच्छिन्नानु-योगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वेन महानसीयवह्न्यभावीयप्रति-योगितायाः वह्निमान् धूमादित्यादौ लक्षणाघटकत्वं महनसीयवह्निमान् धूमादित्यादौ च तादृशावच्छेदकत्वानिरूपकत्वेन तस्याः लक्षणघटत्वं च संभवतीति वदन्ति ॥ तदविचारितरमणीयम् । प्रमेयसाध्यतावच्छे-दककस्थले साध्यतावच्छेदकतायाः केवलान्वयितया तत्प्रतियोगिकपर्या-प्त्यवच्छेदकं यत्केवलान्वयिसमुदायत्वं तदभावाप्रसिद्ध्या स्वाभाववद्वृत्ति-त्वघटितनिरुक्तोभयसंबंधेन तद्विशिष्टरूपाप्रसिद्धेः । जातिमत्वान् घट-त्वादित्यादौ निरुक्तपर्याप्त्यवच्छेदकं यदखिलजातिगतसमुदायत्वं निरुक्तो-भयसंबंधेन तद्विशिष्टं यज्जातितदितरगतसमुदायत्वं तदवच्छिन्नपर्याप्तिका-

वच्छेदकताकत्वस्य जातितदितरावच्छिन्नप्रतियोगितायां प्रसिद्धस्य जातिमात्रावच्छिन्नजातिमत्पटाद्यभावप्रतियोगितायां अभावसत्वेन तामादायाव्याप्तेर्दुर्वारत्वाच्च । यत्तु अवच्छेदकताविशिष्टान्यत्वं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं, वैशिष्ट्यं च स्वनिरूपकत्व, स्वभिन्ना या साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकता, तन्निरूपकत्वोभयसंबंधेन ; तथा च महानसीयवह्न्यभावप्रतियोगितायां महानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वस्य तद्भिन्ना या साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकता तन्निरूप कत्वस्य च सत्वेन तद्वारणं, प्रमेयसाध्यतावच्छेदककस्थले च अवच्छेदकताविशिष्टा प्रमेयवद्घटाभावीयप्रतियोगिता तदन्या च केवलघटाभावीयप्रतियोगितेति नाव्याप्तिरिति ; तदपि नृसिंहाकारावच्छेदकत्वानभ्युपगम एव शोभनम् ; तदभ्युपगमे महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकतायाः महानसीयत्ववह्नित्वैतदुभयनिष्ठाया अभेदेन तत्प्रतियोगितायां महानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वेपि तद्भिन्ननिरुक्तावच्छेदकताकत्वविरहेण तद्वैशिष्ट्यासंभवात् अवच्छेदकताविशिष्टाप्रसिद्ध्या असंभवप्रसंगात्॥ नव्यास्तु साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपिका या साध्यतावच्छेदकावच्छिन्नप्रतियोगिता तदन्यत्वं साध्यतावच्छेदकतदितरानवच्छिन्नत्वपदार्थः । साध्यतावच्छेदकतावैशिष्ट्यं च स्वव्याप्यत्वस्वनिष्ठनिरवच्छिन्नत्वसावच्छिन्नत्वान्यतराधारताविशिष्टान्या या निरवच्छिन्नत्वसावच्छिन्नत्वान्यतराधारता तदनाश्रयत्वोभयसंबंधेन, आधारतावैशिष्ट्यं च, देशविधया स्वावच्छेदकतापर्याप्त्यनधिकरणानवच्छिन्नत्वसंबंधेन ; इत्थं च नृसिंहाकारावच्छेदकताभ्युपगन्तृमतेऽपि महानसीयवह्न्यभावप्रतियोगित्वादिवारणसंभवः, तथाहि । महानसीयवह्न्यभावप्रतियोगितावच्छेदकताया वह्नित्वगतानिरवच्छिन्नसाध्यतावच्छेदकत्वाव्याप्यतया तन्निष्ठाया निरुक्ता-

न्यतरांतर्गतनिरवच्छिन्नत्वाधारता देशविधया तदवच्छेदकतापर्याप्त्यनधिकरणं यन्महानसीयत्ववत्वविशिष्टं तदनवच्छेद्यत्वविरहेण निरुक्तान्यतराधिकरणताविशिष्टान्या या सावच्छिन्नत्वाधिकरणता तदनाश्रयत्वरूपद्वितीयसंबंधविरहेण च साध्यतावच्छेदकताविशिष्टान्यतया तादृशावच्छेदकतानिरुपकत्वस्य साध्यतावच्छेदकीभूतवह्नित्वावाच्छिन्नत्वस्य च सत्वेन महानसीयवह्न्यभावप्रतियोगितायाः निरुक्तप्रतियोगिताभिन्नत्वाभावात् । प्रमेयसाध्यतावच्छेदककस्थले प्रमेयवद्घटाभावप्रतियोगितावच्छेदकता साध्यतावच्छेदकताविशिष्टान्याप्रसिद्ध्या तस्यां केवलान्वयिप्रमेयत्वावच्छिन्नसाध्यतावच्छेदकतायाः व्याप्यत्वसत्वेपि तन्निष्ठा या सावच्छिन्नत्वाधारता तदवच्छेदकतापर्याप्त्यनाधिकरणं यच्छुद्धघटत्वं देशाविधया तदनवच्छेद्यत्वविरहेण निरुक्तान्यतराधिकरणताविशिष्टान्यनिरवच्छिन्नत्वाधिकरणत्वाश्रयतया द्वितीयसंबंधाभावात् । अत्र प्रथमसंबंधनिवेशेन वह्निमान् धूमादित्यादौ तार्णवह्न्यभावप्रतियोगितायां साध्यतावच्छेदकतानिष्ठा या निरवच्छिन्नत्वाधिकरणता आंशिकत्वाभावेन निरवच्छिन्नतया तदनवच्छेदकानवच्छिन्ना या निरवच्छिन्नत्वाधिकरणता तन्मात्राधिकरणतया निरुक्तान्यतराधारतानाश्रयत्वरूपद्वितीयसंबंधमात्रेण साध्यतावच्छेदकताविशिष्टतार्णत्ववह्नित्वोभयनिष्ठावच्छेदकताभिन्नावच्छेदकताकत्वविरहेण निरुक्तप्रतियोगिताभिन्नत्वसत्वात् वह्नित्वस्य तदवच्छेदकत्वमादाय नाव्याप्तिः । द्वितीयसंबंधनिवेशात् प्रमेयसाध्यतावच्छेदककस्थले व्याप्यत्वसंबंधेन साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वाप्रसिद्ध्या न दोषः । अथैवमपि विषयितासंबंधेन ज्ञानत्वत्वावच्छिन्नविशिष्टं यत्समवायेन स्वरूपतो ज्ञानत्वविशिष्टं तस्य तादात्म्येन साध्यतायां तज्ज्ञानत्वहेतौ विषयितासंबंधेन स्वरूपतो ज्ञानत्वविशिष्टसमवायेन ज्ञानत्वत्वावच्छिन्नविशिष्टभेदीयप्रतियोगितामादायाव्याप्तिः । तादृशप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकतावच्छेदकशुद्धज्ञानत्वावच्छेदेन निरवच्छिन्नत्वाधारतया ज्ञानत्वत्वावच्छिन्नावच्छेदेन सावच्छिन्नत्वाधारतया

स्वानवच्छेदकानवच्छिन्नत्वसंबंधेन साध्यतावच्छेदकतानिष्ठान्यतराधारता-विशिष्टनिरुक्तान्यतराधारतामात्राश्रयत्वेन द्वितीयसंबंधस्य ज्ञानत्वमात्रनिष्ठत्वेन ज्ञानत्वगतसाध्यतावच्छेदकताव्याप्यत्वरूपप्रथमसंबंधस्य च सत्वेच निरुक्तोभयसंबंधेन साध्यतावच्छेदकताविशिष्टत्वात् । मैवम् । साध्यतावच्छेदकतावैशिष्ट्यनियामकद्वितीयसंबंधघटकाधारतावैशिष्ट्यनियामकसंबंधमध्ये स्वावच्छेदकतापर्याप्त्यधिकरणावच्छिन्ना या स्वाश्रयनिष्ठावच्छेद्यता तदनिरूपकसंबंधावच्छिन्नत्वविशिष्टान्यत्वस्यापि निवेशनीयत्वात् । एतत्संबंधघटकावच्छिन्नत्ववैशिष्ट्यं च स्वसामानाधिकरण्य स्वावच्छेदकतापर्याप्त्यधिकरणावच्छिन्नत्वोभयसंबंधेन, तथा च साध्यतावच्छेदकतायाः ज्ञानत्वत्वावच्छिन्नरूपकावच्छेदकावच्छेदेन विषयितासंबंधावच्छिन्नत्वसावच्छिन्नत्वाधिकरणतया शुद्धज्ञानत्वावच्छेदेन समवायसंबंधावच्छिन्नत्वनिरवच्छिन्नत्वाधारतया उक्तप्रतियोगितावच्छेदकताया ज्ञानत्वत्वावच्छिन्नावच्छेदेन समवायसंबंधावच्छिन्नत्वसावच्छिन्नत्वाधारतया शुद्धज्ञानत्वावच्छेदेन विषयितासंबंधावच्छिन्नत्वनिरवच्छिन्नत्वाधारतया च तत्प्रतियोगितावच्छेदकतागतनिरवच्छिन्नत्वाधारतायाः साध्यतावच्छेदकतागतनिरवच्छिन्नत्वाधारत्वावच्छेदकशुद्धज्ञानत्वावच्छिन्नावच्छेद्यत्वानिरूपकविषयितासंबंधावच्छिन्नत्वावच्छेदकशुद्धज्ञानत्वानवच्छिन्नत्वविरहेण साध्यतावच्छेदकतागतसावच्छिन्नत्वाधारतानवच्छेदकशुद्धज्ञानत्वानवच्छिन्नत्वविरहेण निरुक्तोभयसंबंधेन साध्यतावच्छेदकतागतनिरुक्तान्यतराधिकरणताविशिष्टत्वासंभवात्, तदवच्छेदकतायास्साध्यतावच्छेदकताविशिष्टान्यतया साध्यतावच्छेदकावच्छिन्ननिरुक्तप्रतियोगितायास्तन्निरूपकत्वेन भिन्नांतेन तद्वारणात्। न च तथापि विषयितासंबंधेन स्वरूपतो ज्ञानत्वविशिष्टसमवायेन स्वरूपतो ज्ञानत्वविशिष्टभेदीयप्रतियोगितामादायोक्तस्थले अव्याप्तितादवस्थ्यम् । स्वप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वस्यांशिकत्वाभावेन तदधिकरणताया निरवच्छिन्नतया साध्यतावच्छेदकतागतनिरुक्तान्यतराधारताया

निरुक्तसंबंधद्वयसत्वेन तत्प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतायाः द्वितीयसंबंधस्य ज्ञानत्वमात्रानिष्ठतया व्याप्यत्वरूपप्रथमसंबंधस्य सत्वेन साध्यतावच्छेदकताविशिष्टत्वादिति वाच्यम् । साध्यतावच्छेदकतावैशिष्ट्यनियामकसंबंधमध्ये स्ववृत्तिसावच्छिन्नत्वनिरवच्छिन्नत्वांतर्गतयावदाश्रयत्वस्यापि निवेशनीयत्वात् । तथा चोक्तस्थले उक्तप्रतियोगितावच्छेदकतायाः केवलनिरवच्छिन्नायाः साध्यतावच्छेदकतावृत्तिनिरुक्तान्यतरान्तर्गतनिरवच्छिन्नत्वसावच्छिन्नत्वोभयानाधारतया उक्तत्रितयसंबंधेन साध्यतावच्छेदकताविशिष्टत्वायोगात् तादृशप्रतियोगिताभादायाव्याप्त्यनवकाशात् । अत्र साध्यतावच्छेदकतावैशिष्ट्यनियामकसंबंधघटकद्वितीयसंबंधे अधिकरणतावैशिष्ट्यनियामकप्रथमद्वितीयसंबंधशरीरे स्वानवच्छेदकत्वस्वावच्छेदकतापर्याप्त्यधिकरणावच्छिन्नावच्छेद्यत्वानिरूपकत्व, अवच्छेदकतासंबंधेन स्वाभाव अवच्छेदकतापर्याप्त्यधिकरणावच्छिन्नावच्छेद्यत्वानिरूपकत्वसंबंधेन स्वाभावरूपे, नातो वह्निमान् धूमादित्यादौ साध्यतावच्छेदकतागतनिरवच्छिन्नत्वाधारतायाः निरवच्छिन्नत्वेपि क्षतिः। तथा च प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावीया या साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपकसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताभिन्नप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। साध्यतावच्छेदकतावैशिष्ट्यं च स्वव्याप्यत्वस्वनिष्ठसावच्छिन्नत्वनिरवच्छिन्नत्वान्यतराधारताविशिष्टान्यनिरवच्छिन्नत्वसावच्छिन्नत्वान्यतराधारतानाश्रयत्वस्ववृत्तिसावच्छिन्नत्वनिरवच्छिन्नत्वांतर्गतयावद्धर्मवत्वैतत्त्रितयसंबंधेन । अधिकरणतावैशिष्ट्यं च अवच्छेदकतासंबन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववद्धर्मानवच्छिन्नत्वस्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वाश्रयनिष्ठावच्छेद्यतानिरूपकत्वसंबंधेन स्वाभाववत्संबंधावच्छेद्यताविशिष्टान्यत्वोभयसंबंधेन । अवच्छेद्यतावैशिष्ट्यं च स्वसामानाधिकरण्यस्वावच्छेदकावच्छेद्यत्वोभयसंबंधेनेति निष्कर्षो बोध्य इति संक्षेपः ॥

केचित्तु साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदकरूपा-वृत्तित्वं साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिता तदन्य-त्वमेव साध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नत्वं, तादृशरूपवृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगितापर्याप्त्यनुयोगितावच्छेदकत्वसंबं-धेन। तथा च निरुक्तपर्याप्त्यवच्छेदकं यद्वह्नित्वगतैकत्वं तत्र महा-नसीयवह्न्यभावीयप्रतियोगिताया उक्तसंबंधेन तदवृत्तितया साध्यता-वच्छेदकतापर्याप्त्यधिकरणवह्नित्वावच्छिन्नतया च निरुक्तप्रतियोगिता-भिन्नत्वविरहेण तद्वारणम्। जातिमत्वान् घटत्वादित्यादौ निरुक्तपर्या-प्त्यवच्छेदकं यज्जातिगतसमुदायत्वं तत्र जातिमद्घटाभावप्रतियोगिताव-च्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदकं; अपितु घटत्वाव-च्छिन्नविशेष्यतापन्ना जातिरेका जातिधर्मितावच्छेदकतापन्नं घटत्वमेक-मित्याकारकधीविशेषविषयत्वरूपं समुदायत्वमेव। अन्यथा जातिमत्सा-मान्याभावजातिमद्घटाभावयोरविशेषापत्तेः। तथा चोक्तसंबंधेन तादृ-शरूपावृत्तित्वस्याधिकं त्वित्यादिन्यायेन साध्यतावच्छेदकतापर्याप्त्यधिक-रणावच्छिन्नत्वस्य च सत्वेन निरुक्तप्रतियोगिताभिन्नत्वासत्वेन जाति-मद्घटाभावप्रतियोगितावारणम्। प्रमेयसाध्यतावच्छेदकके निरुक्तपर्या-प्त्यवच्छेदकं यत्केवलान्वयिसमुदायत्वं तदवृत्तितया साध्यतावच्छेदकप्रमेयां-तर्गतघटत्वाद्यवच्छिन्नतया च घटाद्यभावप्रतियोगिताया निरुक्तप्रतियोगिता-भिन्नत्वासंभवात् तादृशप्रतियोगिताभिन्नप्रतियोगित्वाप्रसिद्ध्या अव्या-प्तिवारणाय साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वदले पर्याप्त्यु-पादानं। तथा च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वं ता-दृशदलार्थः। यद्यपि साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदके ता-दृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानव-च्छेदकत्वविशेषणेनापि महानसीयवह्न्यभावीयप्रतियोगितावारणं संभव-

वतीति साध्यतावच्छेदकतदितरेत्यादिकं व्यर्थम्, तथापि यथासन्निवेशे न वैयर्थ्यमित्याहुः ॥ एतन्मते विषयितया ज्ञानत्वत्वावच्छिन्नविशिष्टं यत्समवायेन स्वरूपतो ज्ञानत्वविशिष्टं तस्य तादात्म्येन साध्यतायां तद्ज्ञानत्वहेतौ विषयितया स्वरूपतो ज्ञानत्वविशिष्टं यत्समवायेन ज्ञानत्वत्वावच्छिन्नविशिष्टं तद्भेदीयप्रतियोगितामादायाव्याप्तिः। साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यत् स्वरूपतो ज्ञानत्वावच्छिन्नविशेषणतापन्नं ज्ञानत्वत्वविशिष्टमेकं ज्ञानत्वत्वावच्छिन्नधर्मितायां स्वरूपतोऽवच्छेदकीभूतं ज्ञानत्वमेकमित्याकारकधीविशेषविषयत्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वाभावेन तस्या निरुक्तप्रतियोगिताभिन्नत्वात्। साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यवच्छेदकतादृशप्रतियोगितावच्छेदकतापर्याप्त्यनवच्छेदकत्वविवक्षणे अलं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वेन प्रतियोगिताविशेषणेनेति तादृशाव्याप्तिवारणं निरुक्तिकुशलैरनुचिन्तनीयमित्यन्तमधिकावेशेन ॥५॥

'साध्यतावच्छेदकाभिन्नो यस्साध्यनिष्ठो धर्मः तदनवच्छेद्या तु प्रतियोगिता न प्रवेश्ये'ति जगदीशः ॥ अत्र साध्यवृत्तित्वं प्रतियोगितावच्छेदकताघटकसंबंधेन न तु साध्यतावच्छेदकताघटकसंबंधेन, तथा सति महानसवृत्तित्वादेः साध्यतावच्छेदकताघटकसमवायेन साध्यावृत्तितया महानसवृत्तिवह्न्यभावप्रतियोगिताया वारणानुपपत्तेः, नापि स्वरूपेण, तद्वह्निगततद्रूपादेः स्वरूपेण साध्यावृत्तितया तद्रूपवद्वह्न्यभावप्रतियोगिताया अवारणप्रसङ्गात्। न च सर्वस्यापि संबंधस्य यत्किंचिदभावप्रतियोगितावच्छेदकतावच्छेदकसंबंधत्वात् प्रतियोगितावच्छेदकताघटकसंबंधत्वस्याव्यावर्तकतया संबंधसामान्येन साध्यवृत्तित्वलाभेन घटत्वादेरपि कालिकसंबंधेन साध्यवृत्तितया तदनवच्छेद्यत्वविरहेण घटाभावप्रतियोगिताया लक्षणघटकत्वासंभवेन तादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यम्। स्वावच्छेदकताघटकसंबंधेन साध्यवृत्तिसाध्यतावच्छेदकताभिन्नधर्मानवच्छिन्ना हेतुमन्नि-

ष्ठाभावीया या स्वात्मिका प्रतियोगिता तस्या विवक्षणात्। तथा च घटाभावप्रतियोगितायाः स्वपदेनोपादाने स्वावच्छेदकताघटकसमवायेन साध्यवृत्तित्वं न घटत्वे अपि तु द्रव्यत्वादौ तदनवच्छेद्या स्वात्मिका घटाभावप्रतियोगिता प्रसिद्धेति। न च स्वत्वाननुगमेन दोषश्शंकनीयः। प्रतियोगितावैशिष्टत्वस्य हेतुमन्निष्ठाभावप्रतियोगिताविशेषणत्वे तात्पर्यात्। प्रतियोगितावैशिष्ट्यं च स्वतादात्म्य, स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसंबंधेन, स्वनिष्ठावच्छेदकता च, स्वावच्छेदकतावच्छेदकसंबंधावच्छिन्नसाध्यनिरूपितवृत्तितावत्साध्यतावच्छेदकधर्मभिन्नधर्मावच्छिन्नत्वसंबंधेन। घटाभावप्रतियोगितां स्वात्मकप्रतियोगितां चादाय महानसवृत्तिवह्न्यभावप्रतियोगितायां प्रतियोगितावैशिष्ट्यवारणाय प्रथमद्वितीयसंबंधयो निवेशः ॥६॥

अत्र कल्पे वह्निमान् धूमादित्यादौ घटाद्यभावप्रतियोगितायास्साध्यतावच्छेदकातिरिक्तघटत्वावच्छिन्नतया लक्षणघटकत्वानुपपत्तिरिति साध्यतावच्छेदकातिरिक्तधर्मे साध्यनिष्ठत्वानिवेशः। अथात्र घटाभावप्रतियोगितायाः लक्षणघटकत्वासंभवेपि विषयितया वह्नित्वविशिष्टाभावीयप्रतियोगिताया लक्षणघटकत्वसंभवाद्व्यर्थमेव तद्विशेषणम्। न चाग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वनिवेशात्संयोगसंबंधावच्छिन्नप्रतियोगिताकस्यैव विषयितया वह्नित्वविशिष्टाभावस्य धर्तव्यतया तस्य प्रतियोगितावच्छेदकसंबंधेन ज्ञानाद्यात्मकप्रतियोग्यधिकरणाप्रसिद्ध्या प्रतियोगिवैयधिकरण्यासंभवेन तदीयप्रतियोगितायां साध्यतावच्छेदकेतरानवच्छिन्नत्वमाकिंचित्करमिति वाच्यम्। घटानुयोगिककालिकसंबंधेन वह्नित्वविशिष्टाभावस्य स्वप्रतियोगितावच्छेदकसंयोगेन प्रतियोग्यधिकरणप्रसिद्ध्या तदीयप्रतियोगितामादायैव वह्निमान् धूमादित्यादौ लक्षणसमन्वयसंभवात्। न च कालातिरिक्तविश्ववृत्तिसंयोगेन घटादेस्साध्यतायां महाकालत्वादिहेतावव्याप्तिः। घटाद्यनुयोगिककालिकसंबंधेन घटत्वविशिष्टस्योक्तसंबंधेन हेत्वधिकरण-

महाकाले सत्वात् । गुणाद्यनुयोगिककालिकसंबंधेन घटत्वविशिष्टस्य उक्त-संयोगेन अधिकरणाप्रसिद्ध्या महादिगनुयोगिकदिक्कृतविशेषणतया घटत्वा-दिविशिष्टस्य केवलसंयोगेन घटादौ संबंधित्वेपि उक्तसंबंधेन संबंधित्वासंभवेन तत्तदभावानां लक्षणाघटकत्वादिति वाच्यम् । साध्यवृत्तित्वानिवेशेपि उक्त-स्थले कालिकेन घटादिसाध्यकमहाकालत्वादिहेताविव अव्याप्तेर्दुर्वारतया साध्यतावच्छेदकसंबंधसामान्ये स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-कत्व, हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्व, उभयाभावघटितक-ल्पस्य आदरणीयतया विषयतया घटत्वविशिष्टाभावमादायैव लक्षणसमन्व-यात् । न च तथापि तत्प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताव-च्छेदकसमवायसंबंधावच्छिन्नत्वाभावान्न तस्य लक्षणघटकत्वमिति वाच्यम्। वह्नित्वप्रतियोगिकसमवायेन वह्नित्वादेस्साध्यतावच्छेदकतायां धूमादिहेतौ साध्यतावच्छेदकतावच्छेदकसंबंधावच्छिन्नहेतुमन्निष्ठाभावप्रतियोगिताव-च्छेदकत्वाप्रसिद्ध्या अव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबंधा-वच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपेण निरुक्तप्रतियोगितावच्छेदकत्वा-भावस्यैव साध्यतावच्छेदके त्वया निवेशनीयतया अस्मन्मते तथा-निवेशे विषयतया घटत्वादिविशिष्टाभावप्रतियोगितावच्छेदकतायाः निरु-क्तस्वरूपात्मकव्यधिकरणसंबंधेन अभावस्य साध्यतावच्छेदके सत्वेन अव्या-प्त्यभावात् । मैवम् ॥ तद्वह्न्यनुयोगिकसमवायेन वह्नित्ववद्वह्निर्नास्तीति-प्रतीतिसिद्धाभावीयप्रतियोगितायाः साध्यतावच्छेदकेतरानवच्छिन्नतया तदवच्छेदकत्वस्य शुद्धसमवायसंबंधावच्छिन्नस्य निरुक्तावच्छेदकताप्रति-योगिकस्वरूपेण वह्नित्वे सत्वाद्वह्निमान् धूमादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेदकनिष्ठावच्छेदक-ताभिन्नावच्छेदकत्वानिरूपकत्वस्यैव साध्यतावच्छेदकेतरानवच्छिन्नत्व-पदेन विवक्षणीयतया विषयितया वह्नित्वविशिष्टाभावप्रतियोगितायाः तथा-विधावच्छेदकताभिन्नविषयितासंबंधावच्छिन्नावच्छेदकतानिरूपकत्वेन लक्ष

णाघटकतया असंभववारणाय साध्यवृत्तिधर्मनिष्ठत्वस्य निरुक्तावच्छेदकताभिन्नावच्छेदकतायां निवेशनीयतया तल्लाभायैव साध्यनिष्ठत्वस्य सार्थकत्वादित्यलम् ॥६॥

'द्रव्यत्वादिरूपेणेत्यादिनिर्दिशती'त्यंतं जागदीशी; द्रव्यत्वादिरूपेणेतितृतीयार्थः अवच्छिन्नत्वं, अन्वयश्चास्य व्याप्यत्वपदार्थीभूतानुमितिजनकतावच्छेदकप्रकारतानिरूपितप्रकारत्वाश्रयस्यैकदेशप्रथमप्रकारतायां । तत्रैव धूम इति सप्तम्यंतार्थधूमनिष्ठत्वस्यान्वयः । तथा च द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्येत्यस्य वह्न्यनुमितिजनकतावच्छेदकधूमनिष्ठद्रव्यत्वावच्छिन्नप्रकारतानिरूपितप्रकारताश्रयस्येत्यर्थः । धूमसामान्य इति । धूमत्वरूपसामान्यधर्मावच्छिन्न इत्यर्थः । अत्रापि सप्तम्यर्थो निष्ठत्वं ; तस्य पूर्वोक्तव्याप्यत्वपदार्थैकदेशप्रथमप्रकारतायामन्वयः । धूमविशेषणतापन्नधूमत्वस्यापि धर्मिपारतन्त्र्येण उक्तप्रकारतायामन्वयः । न च धूमानन्वयिप्रकारतायां कथं तद्विशेषणधूमत्वान्वयः । स्वविशेष्यान्वयिनि स्वान्वयस्यैव धर्मिपारतंत्र्येण अन्वयरूपत्वादिति वाच्यम् । एतदनुरोधेन प्रकृत्यर्थधूमस्यापि सप्तम्यर्थनिष्ठत्वपारतंत्र्येण प्रकारतायामन्वयस्वीकारेण तत्पारतंत्र्येण धूमत्वस्यापि तत्रान्वयसंभवात्। तथा च धूमसामान्ये वा तत्तद्वह्निव्याप्यत्वस्येत्यस्य तत्तद्वह्नित्वावच्छिन्नाविधेयकानुमितिजनकतावच्छेदकधूमनिष्ठधूमत्वावच्छिन्नप्रकारतानिरूपितप्रकारत्वाश्रयस्येत्यर्थः । तादृशप्रकारताश्रयं च द्रव्यव्यापकवह्निसामानाधिकरण्यं धूमव्यापकतत्तद्वह्निसामानाधिकरण्यं बोध्यम् । वारणार्थं—सामानाधिकरण्यांतार्थोद्देश्यतावच्छेदकाभावसंपादनार्थम् । विशिष्य—तत्तद्वह्नित्वाद्यवच्छिन्ननिरूपितव्याप्त्याद्यवृत्तिधर्मपुरस्कारेण । लक्ष्यं—सामानाधिकरण्यांतार्थोद्देश्यं । निर्दिशति—मूलस्य तस्य व्याप्तिरिति उद्देश्यपदार्थतया प्रतिपादयतीत्यर्थः । तद्धर्मावच्छिन्नलिंगकतादृशधर्मावच्छिन्नविधेयताकानुमितिजनकतायां विषयविधयाअवच्छेदिकेति तदर्थ इति । धूमत्वादितत्तद्धर्मावच्छिन्नप्रकारताशा-

लिनिश्चयोत्तरवह्नित्वादितादृशधर्मावच्छिन्नविधेयताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतहेतुप्रकारतानिरूपितप्रकारताश्रयेति तद्रूपविशिष्टस्येत्यादिव्याप्तिरित्यंतदीधितेरर्थ इत्यर्थः। अयं भावः। प्रतियोग्यसामानाधिकरण्येत्यादिमणिग्रंथेन निरुक्तप्रकारत्वावच्छिन्नोद्देश्यताकः प्रतियोग्यसमानाधिकरणधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नविधेयताको बोधो विवक्षितः। तत्र उद्देश्यतावच्छेदेन विधेयभानमप्यभिप्रेतम्। असति बाधके उद्देश्ये विधेयभासकसामग्र्या एव विधेये उद्देश्यतावच्छेदकावच्छेद्यत्वभासकत्वात्। तेन धूमत्वावच्छिन्नहेतुकवह्नित्वावच्छिन्नसाध्यकानुमितौ द्रव्यव्यापकवह्निसामानाधिकरण्यस्य धूमव्यापकमहानसीयवह्निसामानाधिकरण्यस्य च औपयिकत्वव्यवच्छेदः। उद्देश्यतावच्छेदके धूमत्वावच्छिन्नलिंगकत्वानिवेशाद्द्रव्यत्वावच्छिन्नहेतुकवह्नित्वावच्छिन्नसाध्यकानुमितिजनकतावच्छेदकप्रकारतानिरूपितप्रकारताश्रये द्रव्यव्यापकवह्निसामानाधिकरण्ये वह्नित्वावच्छिन्नविधेयताकत्वानिवेशात् धूमत्वावच्छिन्नलिंगकमहानसीयवह्नित्वावच्छिन्नविधेयकानुमितिजनकतावच्छेदकप्रकारतानिरूपितप्रकारत्वाश्रये धूमव्यापकमहानसीयवह्निसामानाधिकरण्ये च प्रकृतविधेयस्य न व्यभिचार इति। न च वह्नौ द्रव्यव्यापकत्वविरहान्महानसीयवह्नौ धूमव्यापकत्वविरहाच्च उक्तविशिष्टयोरप्रसिद्ध्या कथं तत्र व्यभिचार इति वाच्यम्। संयोगेन वह्नेर्द्रव्यत्वावच्छिन्नाव्यापकत्वेपि तत्संबंधेन महानसीयवह्नेर्धूमत्वावच्छिन्नाव्यापकत्वेपि च कालिकेन द्रव्यवह्न्योः धूममहानसीयवह्न्योश्च व्याप्यव्यापकभावसत्वात् तत्रैव व्यभिचारसंभवात्। न चान्यसंबंधेन धूमहेतुकानुमित्यौपयिकव्याप्तौ अन्यसंबंधेन वह्निसाध्यकानुमित्यौपयिकव्याप्तौ च संयोगसंबंधघटितप्रकृतविधेयस्य व्यभिचारवारणाय उद्देश्यतावच्छेदकनिरुक्तधर्मविशिष्टहेतुप्रकारतायां विधेयतायां च संयोगसंबंधावच्छिन्नत्वस्यावश्यं निवेशनीयतया तत एव कालिकसंबंधघटितनिरुक्तव्याप्त्योः व्यभिचारवारणात् कृतं तत्र धूमत्वाव-

च्छिन्नत्ववह्नित्वावच्छिन्नत्वयोर्निवेशेनेति वाच्यम् । कालिकसंबंधघटितधूमव्यापकवह्निसामानाधिकरण्यस्य विधेयतया तत्संबंधावच्छिन्नत्वेन प्रकारताविधेयताघटितनिरुक्तरूपस्य उद्देश्यतावच्छेदकतया चाभिप्रेतत्वेन उक्तविशिष्टयोर्व्यभिचारस्य धूमत्ववह्नित्वावच्छिन्नत्वयोर्निवेशमंतरा वारयितुमशक्यत्वादिति । एवमेवान्यसंबंधेन अन्यधर्मावच्छिन्नसाध्यहेतुकानुमितिजनकताघटितोद्देश्यतावच्छेदकधर्मे तत्तद्धर्मावच्छिन्नहेतुसाध्यकत्वयोः प्रयोजनमवसेयमिति दिक् ॥७॥

महानसीयवह्निवृत्तित्वविशिष्टजातिमान्नास्तीत्यभावं पटसमवेतत्वविशिष्टजातिमदभावं चादाय वह्निमान् धूमात् जातिमत्वान् घटत्वादित्यादावव्याप्तिवारणाय शुद्धविशिष्टसाध्यतावच्छेदकस्थलीयलक्षणप्रविष्टावच्छेदकतयोर्निरवच्छिन्नत्वसाध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वे विशेषणे निवेशिते जगदीशेन ॥ अत्रेयमाशंका ॥ महानसीयवह्निवृत्तित्वोपलक्षितजात्यवच्छिन्नाभावस्य धूमाधिकरणपर्वतादावसत्वान्महानसीयवह्निवृत्तित्वविशिष्टजात्यवच्छिन्नाभावमादाय दोषो वक्तव्यः । तच्च न संभवति । तत्प्रतियोगितावच्छेदकतायाः महानसीयवह्निवृत्तित्वविशिष्टजातिप्रतियोगिकसमवायसंबंधावच्छिन्नायास्साध्यतावच्छेदकतावच्छेदकशुद्धसमवायसंबंधावच्छिन्नत्वाभावेन दोषाभावात् पटसमवेतत्वविशिष्टजातिमदभावस्याप्युक्तरीत्यैव वारणात् । न च तत्प्रतियोगितावच्छेदकतायां शुद्धसमवाय एवावच्छेदकोऽस्त्विति वाच्यम् । तथा सति महानसीयवह्निवृत्तित्वजात्यवच्छिन्नाभावतदुपलक्षितजात्यवच्छिन्नाभावयोरविशेषप्रसङ्गात् । न च विशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकतायामवच्छेदकाविशेषणम् अवच्छेदकं । उपलक्षितावच्छिन्नाभावप्रतियोगितावच्छेदकतायां तन्न तथेति। अनेनैव तयोर्विशेषोपपत्तेस्तदर्थं विशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकतायां विशिष्टाप्रतियोगिकसंबंधावच्छिन्नत्वस्वीकारोऽनुचित इति वाच्यम्। प्रतियोगितासंसर्गकबुद्धौ अवच्छेदकांशे प्रकारतया भासमानस्य प्रतियोगितावच्छेदकता-

वच्छेदकत्वभानानियमात् । कथमन्यथा घटादिशून्ये भूतले जातित्वे प्रतियोगितावच्छेदकतावच्छेदकत्वानवगाही प्रतियोगितावच्छेदकतया भासमानघटत्वादौ प्रकारतया तदवगाही अत्र जातिमान्नास्तीत्याकारकप्रत्ययो न भवेत् । न च विशिष्टप्रतियोगिकसमवायसंबंधावच्छिन्नायां विशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकतायां अधिकंत्वित्यादिन्यायेन साध्यतावच्छेदकतावच्छेदकसंबंधावच्छिन्नत्वसंभवादितिवाच्यम् । महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणाय साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यवच्छेदकरूपवृत्तिसंसर्गताकत्वात्मकस्य साध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वस्य वक्तव्यतया तस्य तत्रासत्वात् । वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यवच्छेदकत्वसंबंधेनेति । अत्रोच्यते । यथा विशिष्टाभावप्रतियोगित्वं प्रतियोगितद्विशेषणोभयपर्याप्तं उपलक्षिताभावप्रतियोगित्वं च केवलविशेष्ये पर्याप्तमिति विशिष्टाभावोपलक्षिताभावयोर्विशेषः, तथा विशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं अवच्छेदकतद्विशेषणोभयपर्याप्तं उपलक्षितावच्छिन्नाभावप्रतियोगितावच्छेदकत्वं केवलविशेष्ये पर्याप्तमिति विशिष्टावच्छिन्नाभावोपलक्षितावच्छिन्नाभावयोरपि विशेष इत्येतन्मते महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतायाः महानसीयवह्निवृत्तित्ववैशिष्ट्य, जाति, उभयपर्याप्तायाः साध्यतावच्छेदकताघटकशुद्धसमवायसंबंधावच्छिन्नत्वेन तामादायाव्याप्तिवारणाय निरवच्छिन्नत्वस्य पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकताया अपि उक्तरीत्या लक्षणघटकतया तामादायाव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यापि सार्थक्यसंभवात् । न च प्रतियोगितायाः विशिष्टप्रतियोगिकसंबंधावच्छिन्नत्वतदभावाभ्यामेव विशिष्टाभवोपलक्षिताभावयोरपि विशेषोपपत्या प्रतियोगितायाः प्रतियोगितद्विशेषणोभयपर्याप्तत्वापर्याप्तत्वाभ्यां तद्विशेषादरो निर्युक्तिक इति दृष्टांता

संगत्या एतन्मतं निर्युक्तिकमिति वाच्यम् । एकत्वप्रागभावविशिष्टघटत्वाव-
च्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या प्रतियोगितायां तदवच्छिन्नत्वासंभवात् ।
एकत्वप्रागभावविशिष्टघटाभावतदुपलक्षितघटाभावयोः प्रतियोगितायां
विशिष्टप्रतियोगिकसंबंधावच्छिन्नत्वतदभावाभ्यां विशेषस्य दुरुपपादतया प्र-
तियोगितायाः उभयपर्याप्तत्वतदभावाभ्यामेव विशेषस्य अकामेनाप्यवश्योप-
पादनीयत्वात् ॥ अथैतन्मतावलंबने घटवृत्तित्वोपलक्षितजात्यवच्छिन्नसाध्यके
घटत्वादिहेतौ घटसमवेतत्वविशिष्टजात्यवच्छिन्नाभावमादायाव्याप्तिप्रसङ्गः ।
न च नासौ प्रतियोगिव्यधिकरणः । हेत्वधिकरणे घटे घटसमवेतत्वोपल-
क्षितजातिमत्वानिति प्रतीत्या तादृशप्रतीतिसिद्धघटसमवेतत्वोपलक्षितजात्य-
वच्छिन्नाधेयतायाः उक्ताभावप्रतियोगितावच्छेदकतापर्याप्त्याधिकरणघटस-
मवेतत्वविशिष्टघटे सत्वादिति वाच्यम् । घटसमवेतत्वविशिष्टजातिमत्सा-
ध्यकघटत्वादिहेतौ व्यभिचारिणि घटसमवेतत्वविशिष्टजातिमदभावस्य हेत्व-
धिकरणे घटे उक्तदिशा प्रतियोगिसामानाधिकरण्यापत्या प्रतियोग्यसमाना-
धिकरणहेतुसमानाधिकरणाभावेत्यंतेन प्रतियोगितावच्छेदकताविशिष्टान्या-
वच्छेदकत्वानिरूपकआधेयतानिरूपितअधिकरणत्वावच्छिन्नभेदवद्वृत्त्वधि-
करणवृत्त्यभावो विवक्षणीयः । प्रतियोगितावच्छेदकतावैशिष्ट्यं च स्वावच्छे-
दकसंबंधावच्छिन्नत्व, स्वसामानाधिकरण्य, स्वसंबंधित्व, एतत्रितयसंबंधेन ;
स्वसंबंधित्वं च स्वविशिष्टधर्मविशिष्टत्व, स्वनिष्ठं यद्धर्मविशिष्टान्यत्वं तद्वत्व,
अन्यतरसंबंधेन; एतदन्यतरघटकप्रथमसंबंधशरीरे धर्मे स्ववैशिष्ट्यं च स्वावच्छे-
दकत्व, स्वाश्रयत्व, उभयसंबंधेन । अत्र सर्वत्रापि स्वपदं प्रतियोगितावच्छे-
दकतापरम् । धर्मविशिष्टत्वं च स्वावच्छिन्नत्व, स्ववृत्तित्व, उभयसंबंधेन । एत-
दन्यतरघटकद्वितीयसंबंधे धर्मविशिष्टत्वमपि उक्तधर्मविशिष्टत्वनियामकोभय-
संबंधेन । तथा च घटसमवेतत्वविशिष्टजात्यवच्छिन्नप्रतियोगितावच्छेदकताया
घटसमवेतत्ववैशिष्ट्य, जाति, उभयपर्याप्तायाः घटसमवेतत्वोपलक्षितजात्यव-
च्छिन्नाधेयतावच्छेदकतायां केवलजातिपर्याप्तायां प्रथमद्वितीयसंबंधयोस्सत्वे-

ऽपि उक्तोभयसंबंधेन स्वविशिष्टं यद्घटसमवेतत्ववैशिष्ट्यं तद्वृत्तित्वाभावेन स्ववृत्तित्वघटितोक्तोभयसंबंधेन स्वविशिष्टधर्मविशिष्टत्वाभावात् स्वस्मिन् घटसमवेतत्वविशिष्टत्वरूपधर्मविशिष्टे धर्मविशिष्टान्यत्वासंभवेन स्ववृत्तिधर्मविशिष्टान्यत्वस्य स्वसंबंधत्वाभावाच्च उक्तान्यतरसंबंधेन स्वसंबंधित्वात्मकतृतीयसंबंधाभावात् तस्याः प्रतियोगितावच्छेदकताविशिष्टान्यतया तादृशावच्छेदकत्वानिरूपिका या घटसमवेतत्वविशिष्टजात्यवच्छिन्नाधेयता तन्निरूपिताधिकरणत्वावच्छिन्नभेदस्य हेत्वधिकरणे घटे सत्वेन उक्तविशिष्टावच्छिन्नाभावस्य उक्तव्यभिचारिणि लक्षणघटकत्वम् । तथा च घटसमवेतत्वोपलक्षितजात्यवच्छिन्नसाध्यकघटत्वादिसद्धेतावप्युक्तरीत्या उक्तविशिष्टावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यासंभवेनाव्याप्तिभिया उक्तमतावलंबनमयुक्तमिति। मैवम् । स्वसामानाधिकरण्य, स्वसंबंधित्वोभयसंबंधेन साध्यतावच्छेदकताविशिष्टान्यत्वस्य साध्यतावच्छेदकताघटकसंबंधावच्छिन्नत्वपदेन विवक्षणात् एतन्मतावलंबनेऽपि दोषाभावादिति। स्वसंबंधित्वं च स्वानवच्छेदकसंबंधावच्छिन्नत्व स्वासंबंधित्व अन्यतरसंबंधेन। स्वासंबंधित्वं च स्वविशिष्टधर्मविशिष्टत्व स्वनिष्ठधर्मविशिष्टान्यत्ववत्वैतदन्यतरसंबंधेन; तथा च घटसमवेतत्वोपलक्षितजातिमत्वान् घटत्वादित्यादौ विशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतायाः उक्तोभयसंबंधेन स्वविशिष्टधर्माप्रसिद्ध्या तद्विशिष्टत्वसंबंधासंभवात् स्ववृत्तित्व, स्वावच्छिन्नत्व, उभयसंबंधेन घटसमवेतत्वात्मकधर्मविशिष्टतया स्ववृत्तियद्धर्मविशिष्टान्यत्वं तद्वत्तारूपसंबंधाभावाच्च उक्तान्यतरसंबंधेन स्वासंबंधित्वस्य स्वसामानाधिकरण्यस्य च सत्वेन उक्तोभयसंबंधेन साध्यतावच्छेदकताविशिष्टतया तामादायाव्याप्तिवारणसंभवात्। यद्यपि जातिमद्वान् घटत्वादित्यादौ पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतायाः जातिमात्रपर्याप्ता या साध्यतावच्छेदकता पूर्वोक्तान्यतरसंबंधेन तदसंबंधित्वस्य तत्सामानाधिकरण्यस्य सत्वेन साध्यतावच्छेदकताविशिष्टतया तामादायाव्याप्तिर्न प्रसज्यते। न च जाति-

तत्रोपलक्षितजातेस्साध्यतावच्छेदकत्वे अव्याप्तेरसंभवेपि जातित्वविशिष्टजाते-स्साध्यतावच्छेदकतायां पटसमवेतत्वविशिष्टजातित्वविशिष्टावच्छिन्नाभाव-प्रतियोगितावच्छेदकतामादायाव्याप्तिः प्रसज्यते। तस्याः पटसमवेतत्व, जा-तित्वतद्विशेष्यीभूतजातिएतत्त्रितयपर्याप्तायाः जातित्वतद्विशेष्यीभूतजाति, एतदुभयपर्याप्ता या साध्यतावच्छेदकता स्वावच्छेदकत्व स्वाश्रयत्वोभयसंबं-धेन तद्विशिष्टं यज्जातित्वं अधिकंत्वित्यादिन्यायेन तदवच्छिन्नतया तद्वृत्तित-या च उक्तान्यतरसंबंधेन तदसंबंधित्वविरहेण साध्यतावच्छेदकताविशिष्टा-न्यत्वादिति तामादायाव्याप्तिवारणाय साध्यतावच्छेदकतावच्छेदकतदि-तरेत्यादिविशेषणमावश्यकमिति वाच्यम्। अवच्छेदकतायां तद्विशेषणोपा-दानेपि घटसमवेतत्वोपलक्षितजातित्वविशिष्टजातेस्साध्यतावच्छेदकत्वे घट-समवेतत्वविशिष्टजातित्वविशिष्टावच्छिन्नाभावप्रतियोगितावच्छेदकतामादा-याव्याप्तिवारणाय स्वविशिष्टधर्मविशिष्टत्वशरीरानिविष्टधर्मवैशिष्ट्यनियामक-संबंधघटकस्वावच्छिन्नत्वस्य स्वेतरानवच्छिन्नत्वरूपस्य विवक्षणीयत्वेन तत एव जातित्वविशिष्टमद्वान् घटत्वादित्यादौ घटसमवेतत्वविशिष्टजातिविशि-ष्टाभावप्रतियोगितावच्छेदकतावारणेन तद्वैयर्थ्यं दुर्वारम्। तथापि जातिम-द्वान् घटत्वादित्यादौ जातिघटत्वोभयविशिष्टाभावप्रतियोगितावच्छेदकता-मादायाव्याप्तिवारणाय तद्विशेषणसार्थक्यमवसेयमिति दिक् ॥८॥

विशिष्टाविशिष्टसाध्यकस्थलीयलक्षणनिरुक्त्योर्भेदमवलंब्य विशिष्ट-साध्यतावच्छेदकस्थलीयलक्षणे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदक-तावच्छेदकेतरानवच्छिन्नत्वं अविशिष्टसाध्यतावच्छेदककस्थलीयलक्षणे प्रति-योगितावच्छेदकतायां निरवच्छिन्नत्वं निवेशितं जगदीशेन। अत्रेयमाशङ्का। अवच्छेदकतासंबंधावच्छिन्नसाध्यतावच्छेदकत्वानिष्ठप्रतियोगिताकाभावव-द्धर्मानवच्छिन्नत्वस्य अवच्छेदकताविशेषणत्वेनैव वह्निमान् धूमादित्यादौ महा नसीयवह्निवृत्तित्वविशिष्टजातिमदभावमादाय अव्याप्तेः जातिमत्वान् घटत्वा-दित्यादौ पटसमवेतत्वविशिष्टजातिमदभावमादाय अव्याप्तेश्च वारणसंभवात्

तदर्थं लक्षणनिरुक्तिभेदावलंबोऽनुचित इति । तथा हि । वह्निमान् धूमादित्यादौ निरवच्छिन्नसाध्यतावच्छेदकतायाः अवच्छेदकतासंबंधस्य व्यधिकरणतया तत्संबंधावच्छिन्नतदभावस्य केवलान्वयितया तद्वान्यो महानसीयवह्निवृत्तित्वादिविशिष्टरूपो धर्मः तदवच्छिन्नत्वेन महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतावारणं जातिमत्वान् घटत्वादित्यादाववच्छेदकतासंबंधेन साध्यतावच्छेदकत्वाभाववत्पटसमवेतत्ववैशिष्ट्यावच्छिन्नत्वेन पटसमवेतत्वविशिष्टजातिमदभावप्रतियोगितावच्छेदकतावारणं चेति। न च वृत्त्यनियामकसंबंधस्याभावप्रतियोगितावच्छेदकत्वमते अवच्छेदकतासंबंधस्य वृत्त्यनियामकत्वेन तत्संबंधावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या साध्यतावच्छेदकतावच्छेदकत्वाभाववद्धर्मानवच्छिन्नत्वस्यैव निवेशनीयतया शुद्धसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकत्वाप्रसिद्ध्या तद्घटितलक्षणायोगेन अवच्छेदकतायां निरवच्छिन्नत्वघटितलक्षणांतरानुसरणमावश्यकमिति वाच्यम् । साध्यतावच्छेदकतावच्छेदकत्वाभावस्थाने साध्यतावच्छेदकत्वनिष्ठनिरूपितत्वसंबंधावच्छिन्नप्रकारतानिरूपितावच्छेदकतात्वावच्छिन्नस्वरूपसंबंधावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यतानिरूपितस्वरूपसंबंधेनाभावस्य निवेशनीयत्वात्। तथा च तादृशाभाववद्धर्मानवच्छिन्नत्वं विशेषणं फलितं। एवं च वह्निमान् धूमादित्यादौ अविशिष्टसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकत्वाप्रसिद्धावपि साध्यतावच्छेदकतावच्छेदकत्ववत् इत्याकारकावच्छेदकतायां निरूपितत्वसंबंधेन साध्यतावच्छेदकताप्रकारकभ्रमे प्रसिद्धस्य निरुक्तविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसंबंधात्मकव्यधिकरणसंबंधेनाभावस्य प्रसिद्ध्या नाव्याप्त्यवकाश इति। न हि विशेषरूपेण संसर्गत्वं साध्यतावच्छेदकसंबंधावच्छिन्नाधिकरणतानिरूपितस्वरूपसंबंधेन प्रतियोगितावच्छेदकतावच्छिन्ननिरूपिताधिकरणत्वाभावं निवेशयतो जगदीशस्यानुमतं। यद्वा स्वनिष्ठत्वप्रमीयत्वउभयाभाववत् साध्यताव-

च्छेदकतानिष्ठप्रकारतानिरूपितअवच्छेदकतानिष्ठप्रकारतानिरूपितविशेष्यता-सामान्यकधर्मानवच्छिन्नत्वमेव साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्न-त्वम् । तथा च अविशिष्टसाध्यतावच्छेदककस्थले महानसीयवह्निवृत्तित्ववै-शिष्ट्यादिस्सर्वोऽपि धर्मः प्रमीयत्वाभावेन निरुक्तोभयाभाववान्निरुक्तविशेष्य-तासामान्यकः प्रसिद्धः । तदनवच्छेद्यघटाद्यभावप्रतियोगितावच्छेदकता-शून्यत्वं साध्यतावच्छेदके निराबाधमिति व्याप्तिनिरुक्तिभेदावलंबोनुचित इति चेन्मैवम् । साध्यसाधनभेदेन व्याप्तेर्भेदस्यावश्यकतया यथाकथंचि-न्निरुक्तयैक्यसंभवेऽपि तस्याकिंचित्करतया विशिष्टसाध्यतावच्छेदककानुमि-तौ गत्यंतरविरहेण साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वरूपगुरुविशे-षणघटितव्याप्तेरूपयोगित्वेपि अविशिष्टसाध्यतावच्छेदककानुमितौ लघुतर-निरवच्छिन्नत्वघटितव्याप्तेरेवोपयोगित्वं बाधकाभावात्, न तु गुरुतरनिरु-क्तविशेषणघटिताया इत्याशयेन निरुक्तिभेदावलंबात्; न तु कथंचिदपि निर्वचनैक्यासंभव इत्याशयेन ॥९॥

'यद्यप्यवश्यक्लृप्ताभिः पर्वतत्वचत्वरत्वादिविशिष्टतत्तद्धूमत्वावच्छि-न्नाधिकरणताव्यक्तिभिरेव धूमवानिति प्रतीत्युपपत्तौ धूमत्वावच्छिन्नाधिकर-णतायां मानाभावात् वह्निमान् धूमादित्यादावव्याप्ति'रिति जागदीशी । अथ पर्वतत्वविशिष्टधूमवानिति प्रतीतौ पर्वतत्ववैशिष्ट्यमात्रस्यैव अवच्छेदकत्वं भासते न तु धूमत्वस्यापि प्रयोजनाभावात् इति पर्वतीयत्वविशिष्टधूमत्वाव-च्छिन्नाधिकरणत्वाप्रसिद्ध्या तया धूमवानिति प्रतीत्युपपादनं जगदीशस्या-नुचितमितिचेत् अत्र केचित् । एकधर्मावच्छिन्नाधेयताया ऐक्यमते घटान्य-त्वविशिष्टद्रव्यवानिति प्रतीतिसिद्धघटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नघटान्य-त्वविशिष्टयावद्द्रव्यनिष्ठाधेयताया एकतया धूमनिष्ठतादृशाधेयतानिरूपिता-धिकरणताया ह्रदादौ सत्वेन धूमनिष्ठाधेयतात्वेन तदवगाहिह्रदो धूमवा-निति प्रत्ययस्य प्रमात्ववारणाय धूमवानिति प्रतीतौ धूमत्वावच्छिन्नाधेयता-त्वेन आधेयताभानस्यावश्यकतया पर्वतत्वविशिष्टधूमवानिति प्रतीतिसिद्धा-

धेयतायां धूमत्वावच्छिन्नत्वानुपगमे तेन रूपेण तदवगाहिपर्वतो धूमवानिति प्रत्ययोपि प्रमा न स्यादिति तत्र धूमत्वावच्छिन्नत्वस्यावश्यकत्वादित्याहुः विवदंते चात्र बहवो विद्वांसः। घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नायाः घटान्यत्वविशिष्टयावद्द्रव्यनिष्ठाया आधेयताया ऐक्योपगमे हेतुतावच्छेदके धूमत्वे घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नस्वाश्रयनिष्ठाधेयतानिरूपिताधिकरणतावद्द्रदनिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वसत्वेपि आधेयतावच्छेदकत्वाभावेन निरूक्तोभयाभावशालितया स्वाश्रयाधिकरणयत्पदेन ह्रदादिकमादाय वह्निमान् धूमादित्यादावव्याप्तेः हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठत्यादिपरिष्कारेपि दुर्वारतापत्तेः। किंच घटान्यत्वविशिष्टद्रव्यवानिति प्रतीतेरपि तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नाधिकरणताविषयकत्वेनैवोपपत्तौ घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नाधेयतायां मानाभावेन तामादाय ह्रदादौ धूमवत्ताप्रतीत्यापादनस्य असंभवात्। धूमवानिति प्रतीतौ धूमत्वावच्छिन्नत्वेनाधेयताभानं निष्प्रयोजनमिति। अथ घटान्यत्वविशिष्टद्रव्यवानिति प्रतीतौ घटान्यत्वविशिष्टद्रव्यनिष्ठत्वेन तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नाधेयताया भानोपगमे घटतदतिरिक्तवृत्तिदण्डात्मकघटान्यत्वविशिष्टद्रव्यनिष्ठघटव्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नाधेयतानिरूपिताधिकरणताया घटे सत्वेन घटो घटान्यत्वविशिष्टद्रव्यवानिति प्रतीत्यापत्त्या तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नाधेयतात्वेनाधेयताभानोपगमे तत्तद्व्यक्तिवृत्तित्वादिवैशिष्ट्यानुपस्थितिदशायां पटादावपि तादृशप्रतीत्यनुपपत्त्या च घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नत्वेन आधेयताभानमावश्यकमिति घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नाधेयताप्रसिद्धिरिति चेत्तर्हि धूमवानिति प्रतीतावपि धूमनिष्ठत्वेनाधेयताभानस्य घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नधूमनिष्ठाधेयतामादाय ह्रदादौ धूमवानिति प्रतीत्यापत्त्या तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नत्वेन आधेयताभानस्यापि तदनुपस्थितिदशायां धूमवानिति प्रतीत्यनुपपत्त्या अयोगेन धूमत्वावच्छिन्नत्वेनाधेयताभानमावश्यकमिति धूमत्वादिरूपसामान्यधर्मा-

वच्छिन्नाधिकरणताया अप्रामाणिकत्वाभिधानमनुचितमापद्येत । यदि च पर्वतत्वविशिष्टधूमवानितिप्रतीतिसिद्धपर्वतत्वादिवैशिष्ट्यधूमत्वधर्मद्वयावच्छिन्नाधेयतायाः धूमवानिति प्रतीतौ धूमत्वावच्छिन्नत्वेन भानोपगमेनैव निर्वाहे धूमत्वावच्छिन्नातिरिक्ताधेयतायां मानाभावेन तस्या एवाप्रसिद्धत्वं ग्रन्थकाराभिप्रेतं ; न च धूमत्वावच्छिन्नातिरिक्ताधेयताया अप्रसिद्धावपि पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधेयताया अधिकंत्वित्यादिन्यायेन हेतुतावच्छेदकावच्छिन्नायाः प्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्त्ययोगात् अतिरिक्ताधेयताया अप्रामाणिकत्वाभिधानस्य प्रकृतानुपयोग इति वाच्यम् । वह्निसामान्याभावो वह्नेरित्यादौ प्रतियोगितासंबंधेन हेतौ प्रतियोगितासंबंधावच्छिन्नमहानसीयवह्नित्वावच्छिन्नाधेयताया अपि अधिकंत्वित्यादिन्यायेन हेतुतावच्छेदकीभूतवह्नित्वावच्छिन्नतया तन्निरूपिताधिकरणतावन्महानसीयवह्न्यभावे वह्निसामान्याभावत्वरूपसाध्याभावेनाव्याप्तिवारणाय इतरवारकघटितहेतुतावच्छेदकावच्छिन्नत्वस्य वक्तव्यतया पर्वतत्वविशिष्टधूमत्वावच्छिन्नाधेयतायां तादृशस्य हेतुतावच्छेदकावच्छिन्नत्वस्यासत्त्वेन धूमत्वमात्रावच्छिन्नातिरिक्ताधेयतामादायैव धूमादिहेतौ लक्षणसमन्वयस्य वक्तव्यतया तदप्रामाणिकत्वाभिधानस्य प्रकृतोपयोगादित्युच्यते । तदा तुल्ययुक्त्या तद्व्यक्तिवृत्तित्वविशिष्टघटान्यत्वविशिष्टद्रव्यवानिति प्रतीतिसिद्धतद्व्यक्तिवृत्तित्वविशिष्टघटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नाधेयतायाः घटान्यत्वविशिष्टद्रव्यवानितिप्रतीतौ घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नत्वेन भानोपगमेनैव निर्वाहात् । घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नातिरिक्ताधेयताया असिद्ध्या तामादायातिप्रसंगासंभवेन धूमवानिति प्रतीतौ धूमत्वावच्छिन्नत्वविशिष्टाधेयताभानमफलमेव । तद्व्यक्तिवृत्तित्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तावानितिप्रतीतिसिद्धाधेयतायाः गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतौ विशिष्टसत्तात्वावच्छिन्नत्वेन मानोपगमेनैव निर्वाहात् । विशिष्टसत्तात्वावच्छिन्नाधेयताया अप्रसिद्ध्या हेतुतावच्छेदके विशिष्ट-

सत्तात्वे आधेयतावच्छेदकत्वाभावेन स्वाश्रयाधिकरणगुणनिष्ठाधिकरणतानि-रूपिताधेयतानवच्छेदकत्वाधेयतावच्छेदकत्वोभयाभावसत्त्वेन स्वाश्रयाधिक-रणयत्पदेन गुणमादाय द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ अव्याप्ति-वारणमपि अशक्यमेव, अथ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्यावच्छिन्नानन्ताधेयतासु घटान्यत्वविशिष्टद्रव्यत्वावच्छिन्नत्वकल्पनामपेक्ष्य लाघवादतिरिक्ताधेयतायां तत्कल्पनस्यैवोचिततया तामादायातिप्रसंगवारणाय धूमवानितिप्रतीतौ धूम-त्वावच्छिन्नत्वविशिष्टाधेयताभानमावश्यकमिति चेत्तर्हि पर्वतत्ववैशिष्ट्याव-च्छिन्नानंताधारतासु धूमत्वावच्छिन्नत्वकल्पनापेक्षया लाघवेनातिरिक्ताधेय-तायां धूमत्वावच्छिन्नत्वकल्पनस्यैवोचितत्वात् । धूमत्वावच्छिन्नातिरिक्ता-धिकरणत्वाप्रसिद्ध्यभिधानं उन्मत्तप्रलापतां भजेदित्येतत्समाधानं सुधीभि-र्विभावनीयम् ॥१०॥

'तथापि हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणता-नवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकः तथाविधहेतु-तावच्छेदकाश्रयस्याधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विव-क्षित'मिति जागदीशी ॥ अथात्र गुणत्ववान् नित्यज्ञानानुयोगिकविषयता-संबंधेन घटादित्यादावव्याप्तिः । नित्यज्ञानस्य विषयतासंबंधेन सर्वाधार-त्वात् तन्निष्ठनित्यज्ञानानुयोगिकविषयतासंबंधावच्छिन्नाधिकरणतानिरूपक-तानवच्छेदकत्वस्याप्रसिद्ध्या स्वाश्रयाधिकरणयत्पदार्थाप्रसिद्धेः । न च वृत्ति-मति सर्वत्र नित्यज्ञाननिष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य सत्वेऽपि अवृत्तौ तस्यासत्वात् न नित्यज्ञाननिष्ठाधिकरणतानिरूपकतानवच्छेदक-त्वाप्रसिद्ध्या यत्पदार्थाप्रसिद्धिरिति वाच्यम् । तादात्म्येन गगनविशिष्टस्य नित्यज्ञाने सत्वात् नित्यज्ञाननिष्ठा या विषयतासंबंधावच्छिन्ना तादात्म्यसंबं-धावच्छिन्नगगनादिनिष्ठावच्छेदकताकानिरूपकताकाधिकरणता तन्निरूपक-तावच्छेदकत्वस्य गगनादावपि सत्वेन तत्रापि निरुक्तानवच्छेदकत्वाप्रसिद्ध्य-संभवात् । न च यन्निष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्येत्यत्र अवच्छेद-

कत्वंहेतुतावच्छेदकतावच्छेदकसंबंधावच्छिन्नं ग्राह्यम् । अन्यथा अयमात्मा मनोन्यत्वविशिष्टात्मनस्संयोगादित्यादौ मनसः कालिकसंबंधेन मनोन्यत्वविशिष्टात्ममनस्संयोगत्वविशिष्टं यत्स्पंदादि समवायेन तदधिकरणतया मनोनिष्ठतादृशाधिकरणतानिरूपकतानवच्छेदकत्वविरहेण निरुक्तोभयाभावस्य विशिष्टात्ममनःसंयोगत्वे सत्वेन स्वाश्रयाधिकरणयत्पदेन मनसोपि धारणसंभवेन तन्निष्ठाभावप्रतियोगितावच्छेदकत्वादात्मत्वस्वस्येत्यव्याप्तिप्रसंगात् । तथाच गुणत्ववान् घटादित्यादौ स्वाश्रयाधिकरणं यन्नित्यज्ञानं तन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वसामान्याभावस्य अप्रसिद्धावपि हेतुतावच्छेदकतावच्छेदकसमवायसंबंधावच्छिन्नं यत्तन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वं समवेतमात्रे प्रसिद्धस्य तस्याभावः असमवेते सर्वत्र सुलभ इति नाव्याप्तिशंकेति वाच्यम् । एवमपि गुणत्ववान् नित्यज्ञानानुयोगिकविषयितासंबंधेन घटविशिष्टादित्यादौ तादात्म्यसंबंधेन हेतुतावच्छेदकतास्थले अव्याप्तेर्दुर्वारत्वात् । नित्यज्ञानस्य तादात्म्यसंबंधेन यत्प्रमेयविशिष्टं स्वानुयोगिकविषयितासंबंधेन तदाधारतया नित्यज्ञाननिष्ठतादृशाधिकरणतानिरूपकतावच्छेदकत्वस्य हेतुतावच्छेदकतावच्छेदकतादात्म्यसंबंधावच्छिन्नस्य केवलान्वयितया तदभावाप्रसिद्ध्या स्वाश्रयाधिकरणयत्पदार्थस्याप्रसिद्धेः, एवं नित्यज्ञानभिन्नं घटाश्रयादित्यादौ विषयितासंबंधेन हेतौ नित्यज्ञाननिष्ठाधिकरणतानिरूपकतानवच्छेदकत्वस्य उक्तदिशा प्रसिद्ध्या तस्य स्वाश्रयाधिकरणीभूतयत्पदेनोपादानासंभवात्, तादात्म्येन घटादियत्किंचिदवच्छिन्नविषयकजन्यज्ञानस्यैव तत्पदोपादेयतया तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् अतिव्याप्तेरपीति चेदत्राहुः । हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकः तथाविधाधिकरणमित्यनेन हेतुतावच्छेदकविशिष्टाधिकरणं विवक्षितं, वैशिष्ट्यं च स्वाश्रयाधिकरणत्वस्वाभाववत्वोभयसंबंधेन । स्वाभावप्रतियोगितावच्छे-

दकसंबंधश्च स्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावरूपः। तथाच धूमत्वादिसामान्यधर्मस्य स्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावस्य व्यधिकरणसंबंधतया तत्संबंधावच्छिन्नप्रतियोगिताकस्वाभावस्य स्वाश्रयाधिकरणत्वस्य च पर्वतादौ सत्वात् निरुक्तोभयसंबंधेन हेतुतावच्छेदकविशिष्टाधिकरणं धूमाधिकरणमात्रं प्रसिद्धमिति वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। गुणादौ विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावसत्वेन उक्तसंबंधावच्छिन्नप्रतियोगिताकस्वाभावरूपद्वितीयसंबंधाभावेन उक्तोभयसंबंधेन हेतुतावच्छेदकविशिष्टसत्तात्ववन्नगुणादीति द्रव्यत्वत्वस्य तन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यादौ नाव्याप्तिः। इत्थं च गुणत्ववान् घटाश्रयादित्यादौ नित्यज्ञानस्य घटावच्छिन्नाधेयतानिरूपितविषयतासंबंधावच्छिन्नाधारतावत्तया स्वावच्छिन्नाधेयतानिरूपिताधारत्वाभावात्मकनिरुक्तसंबंधावच्छिन्नस्वाभाववत्वस्य स्वाश्रयाधिकरणत्वस्य च तत्र सत्वेन निरुक्तोभयसंबंधेन हेतुतावच्छेदकघटादिविशिष्टं नित्यज्ञानं प्रसिद्धमेवेति नाव्याप्तिः। एवमेव उक्तव्यभिचारिणि अतिव्याप्तिवारणं च। वृत्यनियामकसंबंधस्य अभावप्रतियोगितानवच्छेदकत्वे तु स्वनिष्ठप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपिताधिकरणत्वप्रकारतानिरूपिताभावप्रकारतानिरूपितविशेष्यतायाः प्रमीयविशेष्यताप्रतियोगिकस्वरूपसंबंधेन अभाववत्वं तादृशविशेष्यतावृत्तिभेदप्रतियोगितानवच्छेदकः यः प्रमीयत्वकिंचिन्निष्ठत्वोभयं नास्तीति प्रतीतिसिद्धाभावः तन्निरूपितप्रमानिरूपितत्वत्वआधेयतात्वउभयत्वधर्मत्रयावच्छिन्नप्रतियोगितानिरूपितनिरूपितत्वसंबंधावच्छिन्नावच्छेदकतावत्वं वा हेतुतावच्छेदकवैशिष्ट्यनियामकद्वितीयसंबंधो बोध्यः। न तु स्वाभाववत्वमिति समासः॥११॥

'यद्वा यो यदीययावद्विशेषाभाववानित्यस्य यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान् प्रत्येकावच्छिन्नाभावकूट-

वान् स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानित्यर्थः। तथा च संयोगत्वावच्छिन्नप्रतियोगिताव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्त्वस्य पक्षे सत्वान्नासिद्धिर्नवा व्यर्थविशेषणत्वमितिध्येय 'मिति जागदीशी ॥ अथात्र तत्प्रत्येकावच्छिन्नत्वं तत्प्रत्येकनिष्ठोभयावृत्तिधर्मावच्छेदकताकत्वं अन्यथा संयोगाभावनिरूपितप्रतियोगितात्वअभावनिरूपितप्रतियोगितात्वकेवलप्रतियोगितात्वप्रमेयत्वावच्छिन्नतत्प्रतियोगित्वावच्छिन्नाभावानां निरुक्तकूटांतर्गतानां पक्षेऽसत्वात्स्वरूपासिद्धेः। एवं तत्प्रत्येकनिष्ठावच्छेदकतायां स्वरूपसंबंधावच्छिन्नत्वमपि विशेषणं। अन्यथा कालिकसंबंधेन तत्प्रतियोगित्वावच्छिन्नाभावस्यापि कूटांतर्गतत्वेन तस्य वृक्षे सत्वेन असिद्धिप्रसंगात्। इत्थं च पूर्वकल्पवदत्रापि कल्पे असिद्धिवारकयोरुभयावृत्तिधर्मावच्छिन्नत्वस्वरूपसंबंधावच्छिन्नत्वयोः प्रवेशात् व्यर्थविशेषणत्वं दुर्वारमिति न वा व्यर्थविशेषणत्वमित्यसंगतमिति। न च यद्धर्मावच्छिन्नप्रतियोगित्वानि यावंति प्रत्येकं तत्तदवच्छिन्नैकाभावघटितकूटस्य हेतुत्वमभिमतं; न तु तत्प्रत्येकावच्छिन्नाभावस्तोमघटितकूटस्य। तथा च संयोगत्वावच्छिन्नप्रतियोगित्वानि यावन्ति प्रमेयत्वाद्यनुगतरूपावच्छिन्नतत्तदवच्छिन्नाभावस्य असत्वेपि तत्तद्व्यक्तित्वावच्छिन्नतत्तत्प्रतियोगित्वावच्छिन्नप्रतियोगिताकैकाभावघटितस्तोमस्य वृक्षे निराबाधतया कालिकसंबंधावच्छिन्नतत्तत्प्रतियोगित्वावच्छिन्नाभावासत्वेपि स्वरूपसंबंधावच्छिन्नतत्तत्प्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावघटितस्तोमस्य निराबाधतया च उक्तासिद्ध्यनवकाशेन नोक्तविशेषणद्वयावश्यकत्वमिति नासंगतिरिति वाच्यम् ॥ तथापि संयोगत्वाद्यवच्छिन्नयावदंतर्गतसंयोगत्वेन सत्वाकगाहिज्ञानीयसत्तानिष्ठविषयत्वावच्छिन्नाभावस्य वृक्षे असत्वेन असिद्धिवारकप्रतियोगितात्वस्य व्यभिचारावारकत्वेन व्यर्थविशेषणत्वस्य दुर्वारत्वात्। यदि च विषयत्वप्रतियोगित्वादिगतावच्छेद्यत्वानां एकावच्छेद्यतात्वे मानाभावेन अवच्छेद्यतात्वेन प्रतियोगितागतावच्छेद्यताया एव निवेशः।

इति स्फूर्तये प्रतियोगितापदं, न तु प्रतियोगितात्वेन प्रतियोगितानिवेशलाभायेति न व्यर्थविशेषणत्वमिति विभाव्यते; तदा यद्धर्मावच्छिन्नयावत्प्रतियोगित्वांतर्गता या कालिकसंबंधावच्छिन्नसंयोगत्वादिनिष्ठावच्छेदकताकव्याप्यवृत्तिरूपादिनिष्ठा प्रतियोगिता तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वेन असिद्धिवारकतया यद्धर्मावच्छिन्नत्वघटकयद्धर्मनिष्ठावच्छेदकतायां अवश्यं निवेशनीयस्य समवायसंबंधावच्छिन्नत्वस्य व्यभिचारावारकत्वेन व्यर्थविशेषणत्वं दुर्वारमिति। मैवम्। यद्रूपनिष्ठसमवायसंबंधावच्छिन्नावच्छेदकताकप्रतियोगितात्वव्यापकसमुदायत्वावच्छिन्नं हेतुः। समुदायत्वे व्यापकत्वं च स्वाश्रयीभूताभावप्रतियोगितावच्छेदकत्वसंबंधेन। तथा च यद्रूपावच्छिन्नवृत्तिभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववत्कूटत्वस्य निरुक्तप्रतियोगितावृत्तिभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाववत्कूटत्वे अप्रवेशेन वैयर्थ्याभावादिति। वस्तुतस्तु तादृशप्रतियोगितात्वव्यापकत्वमेव हेतुः। व्यापकता च स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसंबंधेन। तथा च यद्धर्मावच्छिन्नवृत्तिभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावसमवायसंबंधावच्छिन्नयद्धर्मनिष्ठावच्छेदकताकप्रतियोगितावृत्तिभेदप्रतियोगितावच्छेदकत्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावयोर्धर्मिणोःप्रतियोगितावच्छेदकभेदेन भेदात् न वैयर्थ्यमिति। न च संयोगत्वावच्छिन्नतत्तत्प्रतियोगित्वावच्छिन्नाभावानां केवलान्वयित्वात् तादृशप्रतियोगित्वानां स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसंबंधेन जगदाधारतया तद्वृत्तिभेदप्रतियोगितानिरूपितोक्तसंबंधावच्छिन्नावच्छेदकत्वाप्रसिद्धिरिति वाच्यम्। तादृशप्रतियोगितात्वव्यापकत्वं हि स्ववृत्त्यभावप्रतियोगितावच्छेदकत्वसंबंधावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबंधेन तादृशप्रतियोगितावच्छेदकत्वसामान्याभावः, न तु तादृशसंबंधावच्छिन्नत्वविशेषिततादृशावच्छेदकत्वसामान्याभावः। तथाच तादृशप्रतियोगितावृत्तिः यस्समवायेन घटत्वाद्यवच्छि-

न्नभेदः तदीयप्रतियोगितावच्छेदकत्वस्य घटत्वादौ प्रसिद्धस्य स्ववृत्त्यभाव-प्रतियोगितावच्छेदकत्वसंबंधावच्छिन्नावच्छेदकतानिरूपितस्वरूपात्मकव्य-धिकरणसंबंधेनाभावस्य केवलान्वयितया नोक्तव्यापकत्वाप्रसिद्धिरिति दिक् ॥१२॥

'अतिप्रसंगभङ्गाय शाखादितत्तदवयवावच्छिन्नावृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्यासंभवा-दितिभाव' इति जागदीशी ॥ अत्रातिप्रसंगः। मूलावच्छिन्नमूर्तांतरसंयो-गस्य शाखादौ एतद्वृक्षवृत्तिगगनादिसंयोगस्य वृक्षांतरावयवे अवच्छेदकता-संबंधेन उत्पत्तिप्रसंगरूपो बोध्यः। यद्यपि वृक्षादौ गगनादिसंयोगस्य शाखामूलाद्यवच्छेदकभेदेन भेदेपि शाखावच्छिन्नवृत्तिको यः कपिसंयोग-स्तस्य कपिचरणादिना दिग्विशेषणाप्यवच्छिन्नतया तत्र शाखादेर्व्यभिचा-रवारणाय शाखादिनिष्ठावच्छेदकत्वमेव शाखादिजन्यतावच्छेदकसंबंधतया वाच्यम्। तथा च तत एव शाखामूलादिसर्वावयवावच्छिन्नस्य गगनादि-संयोगस्याभेदेपि अवयवांतरे व्यभिचाराप्रसक्तया अवच्छेदकभेदेन गगना-दिसंयोगभेदस्य निर्युक्तिकतया यावद्विशेषाभाववत्वं स्वरूपासिद्धं; तथापि गगनवृक्षसंयोगाद्यभावस्यापि वृक्षानधिकरणदेशावच्छेदेन गगनादौ सत्वात् गगनादौ यावद्विशेषाभावसत्वेन तत्रैव यावद्विशेषाभावेन संयोगसामान्या-भावसाधने तात्पर्यम्। तावतापि संयोगी द्रव्यत्वादित्यादौ अव्याप्तिसंभ-वादिति ॥१३॥

'गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशा'दिति जागदीशी ॥ न चोपाधिदोषदानार्थं यो यज्जातिसमानाधिकरणेत्यादिव्याप्तिघटकसाध्यहेतु-शरीरे जातौ गुणविभाजकत्वविशेषणदानमनुचितमिति वाच्यम्। न हि प्रकृतव्याप्तौ तादृशविशेषणं निवेश्य उपाधिदाने तात्पर्यम्। अपि तु यो गुण-विभाजकयज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद-भाववान् स तज्जात्यवच्छिन्नप्रतियोगिताकाभाववानिति व्याप्त्यंतर एव

उपाधिदानेन च तादृशव्याप्तेस्संयोगाभावसिद्ध्यंगतया दीधितिकृतानभिहितत्वात् । तादृशव्याप्तौ उपाधिदोषदानं न यज्जातिसमानाधिकरणेत्यादिसामान्यव्याप्त्यवष्टभ्यसंयोगसामान्याभावसिद्धौ बाधकमिति वाच्यम् । पक्षावृत्तिनिरवच्छिन्नयावद्विशेषाभावाधिकरणत्वे गुणविभाजकजात्यवच्छिन्नाभावव्यापकत्वे गृह्यमाणे गुणविभाजकजात्यवच्छिन्नाभावे तद्व्याप्यत्वग्रहात् ततश्च गुणविभाजकजात्यवच्छिन्नाभावः पक्षावृत्तिः पक्षावृत्तिनिरवच्छिन्नयावद्विशेषाभावाधिकरणताव्याप्यत्वादित्याकारकस्य पक्षे गुणविभाजकजात्यवच्छिन्नाभावसाध्यकानुमितिविरोध्यनुमानस्यावतारात् तस्य गुणविभाजकजात्यवच्छिन्नाभावात्मकसंयोगत्वावच्छिन्नाभावसाध्यकवृक्षादिपक्षकानुमितौ यो यज्जातिसमानाधिकरणेत्यादिव्याप्त्युपष्टम्भ्यायामपि विरोधितया गुणविभाजकजातिघटितानुमाने उपाधिदानस्यापि संयोगाभावसिद्धौ बाधकत्वात् । न च गुणविभाजकजात्यवच्छिन्नाभावघटितव्याप्तावपि निरवच्छिन्नयावद्विशेषाभावाधिकरणत्वस्य उपाधित्वं न संभवति । ज्ञानत्वादिगुणविभाजकजात्यवच्छिन्नाभाववत्यात्मनि तदीययावद्विशेषाभावाधिकरणत्वस्य ज्ञानानवच्छेदकघटाद्यवच्छिन्नतया निरवच्छिन्नयावद्विशेषाभावाधिकरणतायास्तत्रासत्वादिति वाच्यम् । निरवच्छिन्नत्वं न देशविधया अवच्छेदकत्वानिरूपकत्वे सति कालविधया अवच्छेदकत्वानिरूपकत्वं । कालविधया अवच्छेदकत्वानिरूपकत्वनिवेशे प्रयोजनाभावात् । किंतु देशविधया अवच्छेदकत्वानिरूपकत्वं । तथाचात्मनि सुषुप्तिकालावच्छिन्नज्ञानविशेषाभावकूटाधिकरणत्वस्य देशविधया अवच्छेदकत्वानिरूपकस्य सत्वेन व्यापकत्वाक्षतेः । न च संयोगयावद्विशेषाभावाधिकरणत्वस्य उत्पत्तिकालावच्छिन्नस्य देशानवच्छिन्नतया तस्य वृक्षे सत्वात् देशानवच्छिन्नमात्रेण उपाधेस्साधनाव्यापकत्वं नोपपद्यत इति कालानवच्छिन्नत्वघटितरूपेणैव उपाधित्वस्य वाच्यतया कालानवच्छिन्नस्य ज्ञानविशेषाभावकूटाधिकरणत्वस्य आत्मन्यसत्वात्साध्याव्यापकत्वतादवस्थ्यमिति वाच्यम् । स्ववृत्तिसंयोगानां प्रागभाववति उत्पत्ति-

कालावच्छिन्ने वृक्षे तत्कालावच्छेदेन तदभावासंभवात् । तत्र देशानवच्छिन्नयावद्विशेषाभावाधिकरणत्वासत्वेन देशानवच्छिन्नत्वमात्रेण यावद्विशेषाभाववत्वस्योपाधित्वसंभवात् । ध्वंसप्रागभावयोरत्यंताभावविरोधित्वात् । अन्यथा संयोगसामान्याभावस्यापि तत्रोत्पत्तिकालावच्छेदेन सुवचतया तत्र तत्साधनायासोऽयमफलस्स्यात् । न च द्वितीयादिकालावच्छेदेनापि वृक्षे न संयोगयावद्विशेषाभाववत्वम् । वृक्षवृत्तिसंयोगानां ध्वंसप्रागभावयोस्तत्र सत्वादिति स्वरूपासिद्धेरेव संभवेन तामुपेक्ष्य उपाधिदोषप्रतिपादनमयुक्तम् । तस्यासंभवात् । गुणस्यैव साधनाधिकरणतया तत्र निरवच्छिन्नयावद्विशेषाभावाधिकरणत्वसत्वेन साधनाव्यापकत्वासंभवादिति वाच्यम् । ध्वंसाद्यधिकरणे ध्वंसादिकालावच्छेदेनैव अत्यंताभावो न तिष्ठतीति ध्वंसाद्यधिकरणे नात्यंताभाव इति वदतामाशयः । न तु तत्र कदापि न तिष्ठतीति । तथा च वृक्षनिष्ठो यः कपिसंयोगादिः तद्दशायां तदनवच्छेदकमूलाद्यवच्छेदेन तदभाववृत्तौ बाधकाभावेन न स्वरूपासिद्धिः । न वा उपाधेः साधनव्यापकत्वं । वस्तुतस्तु सर्वदा यत्किंचिद्ज्ञानप्रागभावस्य यत्किंचिद्ज्ञानध्वंसस्य च अधिकरणे आत्मनि कदापि न ज्ञानसामान्याभावसंभवः तेन सुषुप्त्यादिकाले जनिष्यमाणज्ञानप्रागभावस्य सत्वेन तदत्यंताभावस्य अतीतज्ञानध्वंसस्य च सत्वेन तदत्यंताभावस्य चासत्वात् आत्मनस्तत्कालावच्छेदेन न ज्ञानविशेषाभावकूटवत्वम् । ज्ञानविशेषाभावकूटवानित्यादिप्रतीत्यन्यथानुपपत्त्या देशभेदावच्छेदेन तादृशविशेषाभावकूटाधिकरणतायाः आत्मनि सत्वेपि न तद्देशभेदानवच्छिन्नं इति उपाधेस्साध्याव्यापकत्वम् गुणविभाजकजात्यवच्छिन्नाभावस्य उक्तव्याप्तौ साध्यविधया प्रवेशेपि दुर्वारमिति शंकाया नावकाशः । इदमुपलक्षणम् । गुणविभाजकजात्यवच्छिन्नाभावसाध्यकोक्तव्याप्तावुपाधिदोषस्य उक्तरीत्या यो यज्जातिसमानाधिकरणेत्यादिसामान्यव्याप्तिज्ञानाधीनसंयोगसामान्याभावसाध्यकानुमितिविरोध्यनुमानोत्थापकत्ववत् वृक्षस्संयोगसामान्याभाववान् संयोगीययावद्विशेषाभाववत्वादिति विशे-

षानुमाने निरवच्छिन्नसंयोगविशेषाभावकूटाधिकरणत्वात्मकोपाधेरपि निरुक्तसामान्यव्याप्तिज्ञानाधीनसंयोगसामान्याभावानुमितिविरोधिसंयोगाभावो वृक्षावृत्तिः वृक्षावृत्त्युपाधिव्याप्यत्वादित्याकारकानुमानोत्थापकत्वं बोध्यमितिसंक्षेपः ॥१४॥

'यत्तु एकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टेत्यर्थ' इति जागदीशी ॥ अथ किमिदं परस्परानवच्छेदकानवच्छिन्नत्वं । न तावत्तादृशाभावकूटांतर्गतयावदभावानवच्छेदकावच्छिन्नत्वाभावः । विभिन्नावच्छिन्नानां तावदभावानां एकावच्छेदकाप्रसिद्ध्या उक्तरूपेणोपाधित्वानुपपत्तेः । अत एव तादृशाभावकूटानवच्छेदकावच्छिन्नत्वाभावः तदिति प्रत्युक्तम् । तादृशकूटावच्छेदकाप्रसिद्धेः । नापि तादृशाभावकूटांतर्गतो यो यो अभावः प्रत्येकं तत्तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वाभावः । शाखामूलादीनां मध्ये कस्यापि तादृशावच्छेदकत्वाभावकूटविरहेण तादृशकूटवान् यो गुणत्वादिः तदवच्छेद्यत्वाभावविशिष्टसंयोगविशेषाभावकूटाधिकरणत्वस्य वृक्षेपि सत्वेन तेन रूपेण साधनाव्यापकत्वानुपपत्तेः; एतेन तादृशकूटांतर्गताभावानां प्रत्येकावच्छेदकत्वाभावकूटस्थाने तादृशकूटांतर्गताभावावच्छेदकत्वसामान्याभावनिवेशोपि प्रत्युक्तः । मैवम् ॥ तावदभावांतर्गतो यो यो अभावः प्रत्येकं तत्तदवच्छेदकावच्छेद्यत्वाभावकूटस्यैव परस्परानवच्छेदकानवच्छिन्नत्वपदार्थत्वात् । इत्थं च वृक्षनिष्ठतादृशाभावकूटाधिकरणतायां अन्यतमत्वादियत्किंचिदनुगतरूपावच्छिन्नशाखामूलाद्यवच्छिन्नायां निरुक्तावच्छिन्नत्वाभावकूटमध्ये कस्याप्यभावेन तादृशावच्छिन्नत्वाभावकूटविशिष्टविशेषाभावकूटत्वावच्छिन्नाधिकरणतायाः साधनाव्यापकत्वनिर्वाहः । वस्तुतस्तु तादृशाभावकूटांतर्गतयत्किंचिदभावानवच्छेदकानवच्छिन्नत्वमेव परस्परानवच्छेदकानवच्छिन्नत्वपदार्थः । तावतापि मूलस्य शाखावच्छिन्नवृत्तिकतादृशकूटांतर्गतयत्किंचिदभावानवच्छेदकत्वात् शाखायाः मूलावच्छिन्नवृत्तिकतादृशाभावानवच्छेदकत्वात् तदनवच्छिन्न-

विशेषाभावकूटाधिकरणत्वस्य वृक्षे असत्वेन साधनाव्यापकत्वस्य तस्य गुणे सत्वेन साध्यव्यापकत्वस्य चोपपत्तेः। तादृशयत्किंचिद्भावानवच्छेदकत्वं च स्वानवच्छेदकत्वसंबंधेन तादृशाभावविशिष्टत्वम्। न च विशेषाभावकूटाधिकरणत्वं विशेषाभाववृत्तिकूटत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वम्। तथा च विशेषाभाववृत्तिकूटत्वपदेन वृक्षावृत्तिसंयोगानां ये अभावाः तन्मात्रगतकूटत्वोपादाने तदवच्छिन्नाधिकरणत्वस्य निरवच्छिन्नतया निरुक्तयत्किंचिदभावानवच्छेदकानवच्छिन्नस्य वृक्षे सत्वात्कथं साधनाव्यापकत्वमिति वाच्यम्। यावद्विशेषाभाववत्वपदेन तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापककूटत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः विवक्षितत्वात्। तथा च कतिपयविशेषाभावमात्रकूटत्वस्य निरुक्ताभावत्वाव्यापकत्वेन दोषाभावात्। तादृशकूटत्वस्य द्विधा निवेशापेक्षया लाघवात् तादृशकूटत्वविशिष्टाधिकरणत्वमुपाधिः। वैशिष्ट्यं च स्वावच्छिन्ननिरूपकताकत्व स्वाश्रयविशिष्टानवच्छिन्नत्वोभयसंबंधेन, स्वं कूटत्वं। स्वाश्रयवैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबंधेन, स्वंअभावः अवच्छेदकता च अवच्छेदकत्वसंबंधावच्छिन्नेति संक्षेपः ॥१५॥

'व्याप्यवृत्तिरूपादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकस्याप्यसंभवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति भाव' इति जागदीशी ॥ यद्यपि निरुक्तयत्किंचिदभावानवच्छेदकत्वस्थाने तादृशाभावांतर्गतयत्किंचिदभावनिष्ठनिरूपितत्वसंबंधावच्छिन्नप्रकारतानिरूपितअवच्छेदकत्वनिष्ठस्वरूपसंबंधावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यत्वप्रतियोगिकस्वरूपेणाभावनिवेशे व्याप्यवृत्तिरूपविशेषाभावकूटांतर्गतयत्किंचिदभावावच्छेदकत्वाप्रसिद्धावपि तादृशाभावनिष्ठप्रकारतानिरूपितअवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य तदभावावच्छेदकमित्याकारकभ्रमे प्रसिद्धस्य प्रमीयविशेष्यत्वप्रतियोगिकस्वरूपात्मकव्यधिकरणसंबंधेनाभावस्य सर्वत्र सुलभतया नोपाधेः साध्यव्यापकत्वानुपपत्तिः। तथापि निर-

वच्छिन्नतादृशाधिकरणतात्वापेक्षया तादृशाभावांतर्गतयत्किंचिदभावनिष्ठनिरूपितत्वसंबंधावच्छिन्नप्रकारतानिरूपितअवच्छेदकत्वनिष्ठस्वरूपसंबंधावच्छिन्नप्रकारतानिरूपितविशेष्यत्वानिष्ठप्रमीयविशेष्यत्वप्रतियोगिकस्वरूपसंबंधावच्छिन्नप्रतियोगिताकाभाववदनवच्छिन्नत्वविशिष्टाधिकरणतात्वस्य गुरुशरीरतया गौरवमेवैतन्मते दूषणं बोध्यम् ॥१६॥

'तथा सति द्रव्यत्वशून्यं सत्वादित्यादावतिव्याप्तिः। द्रव्यत्वरूपसाध्याभावस्य विशेषणतया वृत्तित्वविरहात्। द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेका'दिति जागदीशी ॥ न च द्रव्याभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वेपि तत्प्रतियोगितावच्छेदकत्वस्य द्रव्यत्वाभावत्वे असत्वेनातिव्याप्त्यवारणात् तस्य द्रव्यत्वस्वरूपत्वाभिधानमफलमिति वाच्यम्। तस्यातिरिक्तत्वे द्रव्यत्वप्रकारकप्रमाविशेष्यत्वाभावादीनामपि तथात्वापत्त्या द्रव्यत्वाभावाभावत्वस्य विनिगमनाविरहेण तावद्धर्मिषु कल्पनामपेक्ष्य लाघवादतिरिक्तव्यक्तावेव कल्पनाप्रसंगेण न स्वरूपेण वर्तमानतत्प्रतियोगितावच्छेदकत्वमादायातिव्याप्त्यलग्नकतापत्तेः उक्ताभावानां द्रव्यत्वात्मकत्वे कल्पना धर्मिनानात्वाभावेन द्रव्यत्व एव तदभावाभावत्वस्य कल्पनीयतया तस्य स्वरूपेण वर्तमानतया भवत्यतिव्याप्तिः। केचित्तु द्रव्याभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यातिरिक्तत्वे द्रव्यत्व इव तत्रापि विनिगमनाविरहेण द्रव्यत्वाभावाभावत्वस्य कल्पनीयतया द्रव्यत्वरूपस्य साध्याभावस्य स्वरूपेण वृत्तित्वेपि द्रव्याभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावरूपस्य साध्याभावस्य तेन संबंधेन वर्तमानतया नातिव्याप्तिरिति तस्य द्रव्यत्वरूपत्वाभिधानमित्याहुः ॥१७॥

'अत एव साध्यतावच्छेदकसंबंधेन साध्यवत्वबुद्धेर्विषयतया प्रतिबंधकतावच्छेदको यस्संबंधस्तेन संबंधेन हेतुसामानाधिकरण्यमभावस्य ग्राह्यमित्युक्तावपि न निस्तारः। तथाविधसंबंधेन हेतुसामानाधिकरण्याप्रसिद्ध्या निरुक्तगगनत्वादिहेतौ द्रव्यत्वाभाववज्जातित्वादित्यादौ च अव्याप्ति'रिति

जागदीशी ॥ अथ साध्यवत्ताग्रहविरोधिघटकसंबंधातिरिक्तसंबंधावच्छिन्नत्वं साध्यवत्ताग्रहविरोधिताघटकसंबंधातिरिक्तसंबंधावच्छिन्नत्वसाध्याभावानिष्ठत्वोभयाभाववत्वरूपं विवक्षितं। तथा च द्रव्यत्वाभाववज्जातित्वादित्यादौ हेत्वधिकरणजात्यादिनिरूपितजातित्वमेयत्वादिनिष्ठवृत्तितायां साध्याभावानिष्ठत्वाभावात् निरुक्तोभयाभावसत्वेन न तादृशवृत्तित्वाप्रसिद्धिः। न च संबंधसामान्यावच्छिन्नगगनत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायां घटत्वादिहेतावव्याप्तिः। संबंधसामान्येन गगनवत्तानिश्चयस्य साध्यवत्ताबुद्धिप्रतिबंधकतया सकलसंबंधानामपि तादृशप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकतया तदतिरिक्तसंबंधाप्रसिद्धेरिति वाच्यम्। तादृशविरोधिताघटकसंबंधातिरिक्तसंबंधावच्छिन्नत्वस्य तादृशप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकसंसर्गतावच्छेदकभिन्नधर्मावच्छिन्नसंसर्गताकत्वरूपस्य निरुक्तोभयाभावप्रतियोगिविधया बिवक्षितत्वात्। तथाचोक्तस्थले संबंधसामान्येन गगनवत्ताज्ञाननिष्ठा या उक्तसाध्यवत्ताज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबंधकता तदवच्छेदकप्रकारतानिरूपितसंसर्गतावच्छेदकसंबंधत्वातिरिक्तसंयोगत्वाद्यवच्छिन्नसंसर्गताकत्वस्य घटादिनिष्ठवृत्तितायां प्रसिद्ध्या नाव्याप्तिः। न च तथापि समवायसंबंधावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायां जातित्वादिहेतावव्याप्तिः। हेत्वधिकरणजात्यादिनिरूपितजातित्वादिनिष्ठस्वरूपसंबंधावच्छिन्नवृत्तितायामपि जगत एव साध्याभावतया जातित्वरूपसाध्याभावनिष्ठत्व निरुक्तसंबंधातिरिक्तस्वरूपसंबंधावच्छिन्नत्वयोस्सत्वेन निरुक्तोभयाभावासत्वात् तामादायापि निरुक्तवृत्तित्वप्रसिद्ध्ययोगादिति वाच्यम्। समवायेन प्रमेयाभावाभावत्वस्य समवेतमात्रे निखिलसमवाय्यनुगतसत्तायामेववा स्वीकारेणैवोपपत्तौ प्रमेयमात्रे तत्कल्पनायां मानाभावेन जातित्वादिनिष्ठवृत्तितायां साध्याभावनिष्ठत्वाभावेन निरुक्तोभयाभावसत्वादुक्तस्थलेप्यव्याप्त्यनवकाशादिति। यद्वा साध्यवत्ताग्रहविरोधिताघटकसंबंधेन वृत्तिमत्साध्याभावनिष्ठत्वस्य निरुक्तोभयाभाव-

प्रतियोगिकोटौ निवेशेनोक्तापत्तिवारणं बोध्यम् । अथैवमपि विषयितासंबंधावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायां घटत्वादिहेतावव्याप्तिः । समवायेन प्रमेयाभावाभावत्वस्य सत्तामात्रे कल्पनेनैवोपपत्तावपि विषयितया प्रमेयाभावाभावत्वस्य सकलसविषयकासंग्राहकयात्किंचित्प्रमेयमात्रे कल्पयितुमशक्यत्वेन प्रमेयमात्रस्यैव साध्याभावतया निरुक्तविरोधिताघटकविषयितासंबंधेन वृत्तिमद्घटत्वादिरूपसाध्याभावनिष्ठत्व निरुक्तविरोधिताघटकाविषयितासंबंधातिरिक्तसमवायसंबंधावच्छिन्नत्वयोः हेत्वधिकरणघटादिनिरूपितघटत्वादिनिष्ठवृत्तितायां सत्वेन निरुक्तोभयाभाववद्वृत्त्वधिकरणवृत्तित्वाप्रसिद्धेरिति चेन्न । विषयितासंबंधावच्छिन्नप्रमेयत्वावच्छिन्नप्रातियोगिताकाभावो नास्तीति प्रतीतौ तादृशाभावत्वेन प्रमेयस्यैव विषयितासंबंधेन भानोपगमे प्रमेयमिति ज्ञाने तादृशप्रतीत्यनुपपत्तिः तद्ज्ञानविषयितानवच्छेदकविषायितया प्रमेयाभावाभावत्वावच्छिन्नस्य विषयितासंबंधेन तद्ज्ञाने असत्वात् । तद्ज्ञानीयविषयतावच्छेदकावच्छिन्नस्यैव विषयितासंबंधेन तद्ज्ञानवृत्तित्वनियमादिति तादृशप्रतीतावतिरिक्तस्यैव प्रमेयाभावाभावस्य विषयत्वं सर्वानुमतं तथा च घटत्वादिनिष्ठवृत्तितायां साध्याभावानिष्ठत्वाभावेन निरुक्तोभयाभावसत्वात् नाव्याप्तिः । यदि च नित्यज्ञानानुयोगिकविषयितासंबंधेन प्रमेयाभावस्य स्वरूपेण साध्यतायां घटत्वादिहेतावव्याप्तिः । साध्याभावस्य सर्वधर्मावच्छिन्नविषयकनित्यज्ञानमात्रे प्रतीयमानस्य उक्तबाधकविरहेण विनिगमनाविरहेण निखिलप्रमेयात्मकतया हेत्वधिकरणघटादिनिरूपितवृत्तितायां निरुक्तविरोधिताघटकनित्यज्ञानानुयोगिकविषयितासंबंधेन वृत्तिमद्घटत्वादिस्वरूपसाध्याभावानिष्ठत्वनिरुक्तसंबंधातिरिक्तसमवायसंबंधावच्छिन्नत्वयोस्सत्वान्निरुक्तवृत्तित्वाप्रसिद्धेः । एवं कालिकसंबंधावच्छिन्नप्रमेयाभावस्य स्वरूपेण साध्यतायां जातित्वादिहेतावव्याप्तिरिति विभाव्यते । तदा साध्याभावनिष्ठत्वमपहाय साध्याभावत्वावच्छिन्नत्वस्यैव उभयाभावप्रतियोगिविधया निवेशः कार्यः ।

तथा च हेत्वधिकरणघटजात्यादिनिरूपितप्रमेयत्वाद्यवच्छिन्नवृत्तितायां साध्याभावत्वावच्छिन्नत्वाभावात् । निरुक्तोभयाभावसत्वेन नोक्तस्थलद्वयाव्याप्तिः । न चैवं हेत्वधिकरणमहाकालनिरूपितकालिकसंबंधावच्छिन्नतद्व्यक्तित्वाद्यवच्छिन्नसत्ताभावनिष्ठवृत्तितायास्साध्याभावत्वावच्छिन्नत्वविरहेण निरुक्तोभयाभाववत्तया तामादाय सत्तावान् जातेरित्यादौ अव्याप्तिरिति वाच्यम् । निरुक्तोभयाभाववती या हेत्वधिकरणवृत्तिता तदवच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके निवेशात् । इत्थं च सत्ताभावनिष्ठा तद्व्यक्तित्वावच्छिन्ना या वृत्तिता तदवच्छेदकानुयोगित्वाप्रसिद्ध्या न तामादायाव्याप्तिः । द्रव्यत्वाभावप्रमेयोभयवान् जातित्वादित्यादावव्याप्तिः । हेत्वधिकरणजातिनिरूपितजातित्वाभावाभावत्वावच्छिन्नवृत्तितायां जातित्वाभावस्वरूपसाध्यनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नत्वानिरुक्तविरोधिताघटकसंबंधातिरिक्तस्वरूपसंबंधावच्छिन्नत्वयोस्सत्त्वेन तस्याः लक्षणाघटकत्वात् । जातित्वत्वादि अपरधर्मावच्छिन्नवृत्तित्ववारणासंभवस्य त्वयैवोक्तत्वादिति । न च द्रव्यत्वाभावप्रमेयोभयवत्ताबुद्धिं प्रति प्रमेयाभाववत्तानिश्चयस्य स्वरूपसंबंधावगाहिनः प्रतिबंधकतया स्वरूपसंबंधो न तादृशसंबंधातिरिक्तः । अपि तु संयोगादिः । तदवच्छिन्नत्वाभावात् निरुक्तोभयाभाववत्वं जातित्वाभावाभावत्वावच्छिन्नवृत्तितायां सुलभमिति वाच्यम् । प्रमेयाभावस्य अप्रसिद्ध्या तन्निश्चयस्य प्रतिबंधकत्वासंभवेन स्वरूपस्य तत्प्रतिबंधकतावच्छेदकप्रकारतावच्छेदकत्वायोगात् । न चाभावांशे स्वरूपसंबंधावच्छिन्नप्रतियोगितासंसर्गेण प्रमेयप्रकारकः घटः प्रमेयाभाववानिति भ्रमः प्रसिद्ध इति स्वरूपस्य तन्निष्ठसाध्यवत्ताज्ञानप्रतिबंधकताघटकत्वं संभवतीति शंक्यम् । अभावांशे प्रतियोगितासंसर्गकभ्रमस्य पूर्वपक्षलक्षणे गदाधरभट्टाचार्यैर्निराकृतत्वादितिदूषणं साध्याभावत्वपदेन साध्यतावच्छेदकतावच्छिन्नप्रतियोगिताकाभावत्वविवक्षया निरसनीयम् । न च केवलान्वयिनि तादृशसाध्याभावत्वाप्रसिद्धिरिति शंक्यं । प्रतियोगि-

तायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वप्रवेशे प्रयोजनाभावेन संबंधसामान्या-च्छिन्नसाध्याभाव एव तत्प्रसिद्धेः। इति रीत्या साध्यवत्ताग्रहविरोधिता-घटकसंबंधावच्छिन्नत्वकल्पस्यापि परिष्कर्तुं शक्यतया तथापीत्यादिना कल्पा-तरानुसरणमफलमिति मैवम्। साध्यवत्ताग्रहविरोधिताघटकसंबंधावच्छिन्न-त्वस्य कथं चिदुक्तरीत्या परिष्कारसंभवेपि तस्य तथापीत्यादिना वक्ष्यमाण-कल्पापेक्षया गुरुशरीरतया तदुपेक्षा न तु कथंचिदपि परिष्कारासंभव इत्याशयेनेत्यलमनल्पजल्पनेन ॥१८॥

'तथापि साध्यतावच्छेदकसंबंधेन स्वप्रतियोगिमत्वबुद्धेर्विषयितया प्रतिबंधकतावच्छेदको यस्संबंधस्तेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षित-मित्यदोष' इति जागदीशी॥ घटत्वाभावस्य यः कालिकसंबंधावच्छिन्नाभावः कालिकेन तदात्मकस्वप्रतियोगिमत्ताबुद्धिं प्रति कालिकसंबंधावच्छिन्नतदभा-वनिश्चयस्य स्वरूपसंबंधावगाहिनः प्रतिबंधकतया तद्घटकस्वरूपसंबंधेन हेत्व-धिकरणगगनादौ वर्तमानघटत्वाभावात्मक साध्याभावमादाय घटत्वाभावस्य कालिकसंबंधेनाभावस्य स्वरूपेण साध्यतायां गगनत्वादिहेतावव्याप्तिवारणाय साध्यतावच्छेदकसंबंधनिवेशः। गगनवृत्तित्वविशिष्टोक्तसाध्यवत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य स्वरूपसंसर्गावगाहिनः प्रतिबंधकतया तद्घटकस्वरूप-मादाय घटत्वाभावात्मकसाध्याभावस्य स्वपदार्थत्ववारणाय स्वप्रतियोगिम-त्ताज्ञानं स्वप्रतियोगितावच्छेदकपर्याप्तप्रकारतावच्छेदकं ग्राह्यम्। भूतलादौ घटादिसमूहालंबनात्मकोक्तसाध्यवत्ताज्ञानमादाय स्वरूपस्य उक्तस्थले साध्याभावप्रतियोगिमत्ताज्ञानविरोधिताघटकत्ववारणाय स्वप्रतियोगिता-वच्छेदकावच्छिन्नप्रकारतावच्छिन्नत्वेन प्रतिबध्यता निवेश्या। अथ कालि-कसंबंधावच्छिन्नप्रतियोगिताकघटत्वाभावाभाववान् घट इति बुद्धिं प्रत्यभाव-वद्भिन्नो घट इत्यादिनिश्चयस्यापि सामान्यवच्छेदनिश्चयविधया प्रतिबंधकत-या अभाववत्वावच्छिन्नप्रकारतात्वेन उक्तज्ञानीयस्वप्रतियोगितावच्छेदकाव-च्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपिततत्प्रतिबंधकताघटकत्वं स्वरूपस्य

दुर्वारमिति स्वपदेन साध्याभावमादायोक्तस्थले दोषो दुर्वारः । मैवम् ॥ प्रतियोगितावच्छेदकतावच्छिन्नप्रकारताशालिग्रहत्वावच्छिन्नत्वस्य तादृशग्रहत्वव्याप्यत्वरूपस्य प्रतिबध्यतायां निवेशनीयत्वात् । तथाचाभाववद्भेदवत्तानिश्चयप्रतिबध्यताया घटत्वाभावात्मकनिरुक्तसाध्याभावप्रतियोगितावच्छेदकघटत्वभावाभावत्वावच्छिन्नप्रकारताशून्ये अभाववान् घट इति ज्ञाने सत्वेन न तामादाय स्वरूपस्य उक्तविरोधिताघटकत्वमिति न साध्याभावमादायोक्तस्थले ऽव्याप्तिः । न च घटत्वाभावाभावतत्कालीनो घटो अभाववानिति बुद्धौ या तादृशघटे अभाववद्भेदवत्तानिश्चयप्रतिबध्यता तस्यां प्रतियोगितावच्छेदकघटत्वाभावाभावत्वावच्छिन्नप्रकारताव्याप्यत्वमक्षतं । तत्प्रतिबध्यतावज्ज्ञानस्य धर्मितावच्छेदकघटकतया घटत्वाभावाभावत्वावच्छिन्नप्रकारताकत्वनियमादिति तन्निरूपितविरोधिताघटकत्वं स्वरूपस्य दुर्वारं धर्मितावच्छेदकविषयत्वानंतर्गत स्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताव्याप्यत्वनिवेशे च सर्वत्र तादृशप्रतिबध्यत्वाप्रसिद्धिः । भूतले घटाद्यभाववत्तानिश्चयप्रतिबध्यताया अपि धर्मितावच्छेदकविषयत्वानंतर्गतघटाभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारताशून्ये घटादिविशेषितभूतलादौ प्रमेयत्वादिप्रकारकघटवद्भूतलं प्रमेयमितिज्ञाने सत्वादिति वाच्यम् । तादृशप्रकारताव्याप्यत्वघटकवृत्तित्वस्य स्वावच्छेदकीभूतधर्मितावच्छेदकविषयत्वानंतःपातिप्रकारतानिरूपकत्वसंबंधेन विवक्षणात् । निरुक्तविषयत्वानंतर्गतस्वप्रतियोगितावच्छेदकघटत्वावच्छिन्नप्रकारताशून्ये घटवद्भूतलं प्रमेयमिति ज्ञाने प्रतिबध्यतायाः स्वरूपेण वृत्तित्वेपि उक्तसंबंधेनावृत्तित्वान्नतादृशप्रतिबध्यत्वाप्रसिद्धिः । न च तथापि घटत्वाभावस्य कालिकसंबंधेन अभावे स्वरूपेण साध्ये प्रमेयत्वादिहेतावतिव्याप्तिः । तादृशसाध्याभाववत्तानिश्चयप्रतिबध्यतायाः घटत्वाभावत्वेन पटत्वाद्यभावावगाहि घटत्वाभावाभाववान् घट इति ज्ञाने तत्प्रतियोगितावच्छेदकवास्तवघटत्वाभावाभावत्वावच्छिन्नप्रकारताशून्येसत्वेन तस्याः तादृशप्रकारत्वाव्याप्यतया तादृशप्रतिबध्यत्वाप्रसिद्ध्या

स्वपदेन साध्याभावस्य धर्तुमशक्यत्वादिति वाच्यम् । निरुक्तप्रकारताव्याप्यत्वस्य तादृशप्रकारताशून्यभ्रमान्यज्ञानावृत्तित्वरूपस्य प्रतिबध्यतायां निवेशात्तथा च साध्याभावनिश्चयप्रतिबध्यतायास्तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारताशून्य उक्तज्ञाने सत्वेपि तस्य भ्रमान्यत्वाविरहेण भ्रमान्यतादृशज्ञानावृत्तित्वस्याक्षतत्वात् । स्वपदेन साध्याभावस्यापि धारणसंभवेनोक्तस्थले अतिव्याप्त्यभावात् । अथैवं तादृशप्रकारताशून्यज्ञाने भ्रमान्यत्वनिवेशे कालिकावच्छिन्नघटत्वाभावाभाववान् गगनत्वादित्यादावव्याप्तिः तदवस्थैव । तादृशसाध्याभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशून्यभ्रमान्यज्ञानावृत्तिर्या ह्रदे वह्निप्रकारकबुद्धित्वावच्छिन्नभ्रमत्वानियतप्रतिबध्यता तन्निरूपितप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकस्वरूपसंबंधेन हतुमद्गगनवृत्तित्वस्य साध्याभावे सत्वेन तस्यापि स्वपदेन धर्तुं शक्यत्वादिति । स्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिष्ठस्वरूपसंबंधरूपावच्छेदकतानिरूपकत्वमपि प्रतिबध्यतायां निवेश्य तत्प्रतिबध्यतावारणेपि काञ्चनमयपर्वतो अभाववानिति बुद्धिनिष्ठा या तादृशपर्वते अभाववद्भेदवत्तानिश्चयप्रतिबध्यता तस्यां भ्रमत्वनियततया निरुक्तसाध्याभावप्रतियोगितावच्छेदकतावच्छिन्नप्रकारताव्याप्यत्वस्य अभावत्वावच्छिन्नप्रकारतात्वेन तादृशप्रकारत्वावच्छिन्नत्वस्य च सत्वेन तन्निरूपितप्रतिबंधकताघटकस्वरूपसंबंधमादाय साध्याभावस्य लक्षणघटकत्वं दुर्वारमेव । न च स्वप्रतियोगितावच्छेदकांशे भ्रमान्यत्वमेव निरुक्तप्रकारताव्याप्यत्वघटकज्ञाने निवेशनीयं । न तु भ्रमसामान्यभेदः । तथा च कांचनमयपर्वतो अभाववानिति ज्ञानस्योक्तसाध्याभावप्रतियोगितावच्छेदकांशे भ्रमभिन्नत्वेन तद्वृत्तित्वाभावस्य तादृशपर्वते अभाववद्भेदवत्तानिश्चयप्रतिबध्यतायामभावान्न तामादाय साध्याभावस्य लक्षणघटकत्वं । इत्थं च प्रतिबध्यतायां तादृशप्रकारत्वावच्छिन्नत्वं न देयमेव । ह्रदो वह्निमानिति ज्ञानस्यापि उक्तसाध्याभावप्रतियोगितावच्छेदकांशे भ्रमभिन्नतया तद्वृत्तिप्रतिबध्यतामादायाप्युक्तस्थले अव्याप्त्यनवकाशात् । प्रतियोगि-

तावच्छेदकांशे भ्रमत्वं च प्रतियोगितावच्छेदकनिष्ठप्रकारताविशिष्टविशेष्यता-निरूपकत्वं। प्रकारतावैशिष्ट्यं च विशेष्यतायां, स्वनिरूपितत्व, स्वावच्छेदकसंबंधावच्छिन्नस्वाश्रयनिष्ठप्रतियोगिताकाभावसामानाधिकरण्योभयसंबंधेनेति वाच्यम्। स्वप्रतियोगितावच्छेदकघटकघटत्वांशे भ्रमात्मकघटत्ववान् घटो अभाववानिति ज्ञाननिष्ठायास्तादृशघटे अभाववत्त्वानिश्चयप्रतिबध्यतायाः निरुक्तसाध्याभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशून्यप्रतियोगितावच्छेदकांशे भ्रमभिन्नोदासीनज्ञानावृत्तितया तन्निरूपितप्रतिबंधकताघटकस्वरूपसंबंधमादाय साध्याभावस्योक्तस्थले लक्षणघटकत्वस्य दुर्वारत्वात्। न चावच्छेदकताद्वयानिरूपकविशेष्यत्वावच्छिन्नत्वं प्रतिबध्यताविशेषणं तेन घटत्वपटत्वधर्मद्वयावच्छिन्नविशेष्यतावच्छिन्नोक्तप्रतिबध्यताव्युदास इति वाच्यम्। एवमपि व्यधिकरणसंयोगाधिसंबंधेन घटत्वादिधर्मितावच्छेदककाभाववत्ताबुद्धिनिष्ठप्रतिबध्यतायाः प्रतियोगितावच्छेदकघटत्वांशे भ्रममात्रनिष्ठतया निरुक्तव्याप्यत्वस्य घटत्वमात्रावच्छिन्नविशेष्यत्वावच्छिन्नतया निरुक्तविशेष्यत्वावच्छिन्नत्वस्य च सत्वेन तन्निरूपितप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकस्वरूपसंबंधमादायोक्तदोषतादवस्थ्यात्। मैवम्॥ अवच्छेदकताद्वयानिरूपकविशेष्यतायां निरवच्छिन्नावच्छेदकताकत्वमपि निवेश्य संयोगादिसंबंधावच्छिन्नघटत्वत्वावच्छिन्नावच्छेदकताकविशेष्यत्वावच्छिन्नोक्तप्रतिबध्यतामादायोक्तस्थले दोषाभावात्। न हि घटत्वादीनां संयोगेनापि स्वरूपतोभानं। तथाच स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकधर्मितावच्छेदकविषयत्वानंतःपातिप्रकारत्वाभाववत्प्रतियोगितावच्छेदकांशे भ्रमभिन्नज्ञाननिरूपितधर्मितावच्छेदकविषयत्वानंतःपातिस्वावच्छेदकप्रकारतानिरूपकत्वसंबंधावच्छिन्नवृत्तित्वाभाववती या अवच्छेदकताद्वयानिरूपक निरवच्छिन्नावच्छेदकताकविशेष्यत्वावच्छिन्नप्रतिबध्यता तन्निरूपितप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकसंबंधावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावत्स्वात्मकाभावप्रतियोगितावच्छेदक-

साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्षः। वस्तुतस्तु संबंधघटकप्रतियोगितावच्छेदकावच्छिन्नप्रकारत्वावच्छिन्नप्रतिबध्यतायां स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मानवच्छिन्नप्रकारतावच्छेदकधर्मपर्याप्तावच्छेदकताकप्रकारत्वानवच्छिन्नत्वं निवेशनीयं। तथा चोक्तस्थले अभाववत्त्वेदवत्तानिश्चयप्रतिबध्यतायास्साध्याभावप्रतियोगितावच्छेदककालिकेन घटत्वाभावाभावत्वानवच्छिन्नाया अभाववान् घट इति ज्ञाननिष्ठा प्रकारता तदवच्छेदकाभावत्वावच्छिन्नतद्ज्ञानीयप्रकारत्वावच्छिन्नतया न तामादाय दोषः। अत्र पूर्वक्षणवृत्तित्वविशिष्टसाध्याभावस्य स्वरूपेण योऽभावः तदभावस्य विशिष्टसाध्याभावस्वरूपतया साध्याभावप्रतियोगितावच्छेदकं यत्पूर्वक्षणवृत्तित्वविशिष्टस्वाभावत्वं तदवच्छिन्नप्रकारताशालिग्रहविरोधिताघटकस्वरूपसंबंधेन हेत्वधिकरणे वर्तमानसाध्याभावीयघटत्वाभावाभावत्वावच्छिन्नप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके वर्तत इत्येवं प्रतियोगिताभेदनिबंधनो दोषः संबंधघटकप्रतियोगित्वहेतुसमानाधिकरणाभावप्रतियोगित्वयोरैक्यविवक्षया निरसनीयः। तथा च प्रतियोगिताविशिष्टा या प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। प्रतियोगितावैशिष्ट्यं च प्रतियोगितायां, स्वतादात्म्य, स्वावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टप्रतिबध्यतानिरूपितप्रतिबंधकतावच्छेदकप्रकारतावच्छेदकसंबंधावच्छिन्नहेत्वधिकरणवृत्तितावदभावीयत्वोभयसंबंधेन। धर्मवैशिष्ट्यं च प्रतिबध्यतायां स्वावच्छिन्नप्रकारत्वावच्छिन्नत्व, स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वोभयसंबंधेन। स्वनिष्ठावच्छेदकता च स्वविशिष्टप्रकारतावच्छेदकधर्मपर्याप्तावच्छेदकताकप्रकारत्वावच्छिन्नत्वसंबंधेन। प्रकारतायां स्ववैशिष्ट्यं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबंधेन। स्वनिष्ठावच्छेदकता च अवच्छिन्नत्वसंबंधेन, संबंधव्याप्तिः स्वयमूहनीयेत्यलमतिवाचालतया ॥१९॥

'स्वप्रतियोगित्वं यादृशसंबंधावच्छिन्नं तादृशसंबंधेन यत्प्रतियोगिसंबंधितद्वृत्तित्वाभावस्योक्तत्वा'दिति जागदीशी ॥ स्वप्रतियोगितानिरूपितसंसर्गतावच्छेदकयत्किंचिद्रूपावच्छिन्नसंसर्गताकप्रतियोगितावच्छेदकतावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वाभावस्येति तदर्थः। संसर्गतावच्छेदके यत्किंचित्वनिवेशात् जातिमान् जातित्वादित्यादौ जात्यभावस्य स्वप्रतियोगितानिरूपितसंसर्गतावच्छेदकतादात्म्यत्वमादाय प्रतियोग्यसामानाधिकरण्यानुपपत्तिरिति शंकाया नावकाशः। अथैवमपि कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिः। वृक्षवृत्तित्वविशिष्टस्य स्वरूपेण योऽभावः स्वप्रतियोगिकस्वरूपेण तदभावस्य वृक्षवृत्तिसामान्यस्वरूपस्य वृक्षवृत्तिकपिसंयोगाभावात्मकत्वे अविवादात्कपिसंयोगाभावनिरूपिता या वृक्षवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठा तादृशाभावप्रतियोगिकस्वरूपसंबंधावच्छिन्नप्रतियोगिता तन्निरूपितसंसर्गतावच्छेदकं यद्वृक्षवृत्तित्वविशिष्टाभावप्रतियोगिकस्वरूपत्वं तद्रूपावच्छिन्नसंसर्गताकस्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिता या वृक्षभिन्ने प्रसिद्धाधिकरणता तद्वद्वृत्तित्वाभावस्य हेत्वधिकरणैतद्वृक्षत्वावच्छेदेन कपिसंयोगाभावे सत्वात्। न च स्वेतरानिरूपितस्वनिरूपितप्रतियोगितानिरूपितसंसर्गतावच्छेदकयत्किंचिद्रूपघटितमेव प्रतियोग्यसामानाधिकरण्यं निवेशनीयं। इत्थं च वृक्षवृत्तित्वावच्छिन्नाभावनिष्ठप्रतियोगितायाः कपिसंयोगाभावनिरूपितत्वेपि तदितरगगनाद्यभावनिरूपितत्वविरहेण न तामादाय दोष इति वाच्यम्। तथा सति घटादिनिष्ठतदभावीयप्रतियोगिताया अपि स्वेतरानुयोगितानिरूपितत्वेन तादृशप्रतियोगित्वाप्रसिद्ध्या असंभवप्रसंगात्। न च स्वभिन्नं यदनुयोगिताभिन्नं तदनिरूपितत्वमेव प्रतियोगिताविशेषणमिति स्वेतरानुयोगितानिरूपितत्वमादाय न तादृशप्रतियोगित्वाप्रसिद्धिरिति वाच्यम्। एवमपि वृक्षवृत्तित्वविशिष्टं यत्कपिसंयोगाभाववृक्षाभावाभावत्वरूपअनुयोगित्वान्यतरत्तदभावस्य स्वप्रतियोगिकस्वरूपसंबंधेन यो अभावस्तस्य निरुक्तान्यतरस्वरूपस्य कपिसंयोगाभा-

वात्मकतया तदीयनिरुक्तान्यतराभावनिष्ठप्रतियोगितावच्छेदकसंसर्गतावच्छेदकनिरुक्तान्यतराभावप्रतियोगिकस्वरूपत्वावच्छिन्नसंबंधेन प्रतियोग्यसामानाधिकरण्यस्य एतद्वृक्षावच्छेदेन कपिसंयोगाभावे अक्षतत्वाद्व्याप्तिताद्वस्थ्यात् । न च स्वनिष्ठानुयोगिताभिन्नत्वं स्वाभिन्नाविशेषणं न तु सामान्यतो अनुयोगिताभेदः । इत्थं च निरुक्तान्यतराभावनिष्ठप्रतियोगितायाः कपिसंयोगाभावभिन्ना तन्निष्ठानुयोगिताभिन्ना च या वृक्षाभावाभावस्वरूपानुयोगिता तन्निरूपितत्वेन न तामादायापि कपिसंयोगाभावस्य प्रतियोग्यसामानाधिकरण्यप्रसंग इति वाच्यम् । वृक्षवृत्तित्वविशिष्टं यत्कपिसंयोगाभावप्रमेयाभावाभावत्वान्यतरत् तदभावस्य स्वप्रतियोगिकस्वरूपेण योऽभावः तस्य निरुक्तान्यतरस्वरूपस्य कपिसंयोगाभावस्वरूपत्वेन तदीयनिरुक्तान्यतराभावनिष्ठप्रतियोगितानिरूपितसंसर्गतावच्छेदकनिरुक्तान्यतराभावप्रतियोगिकस्वरूपत्वावच्छिन्नसंबंधेन प्रतियोग्यसामानाधिकरण्यस्य कपिसंयोगाभावे दुर्वारत्वात् । मैवम् ॥ स्वीययत्प्रतियोगितानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतात्ववृत्तित्वाभाववान्यो हेत्वधिकरणवृत्त्यभावः तदीया या तत्प्रतियोगितासमानाधिकरणा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके निवेशात् । एवं च कपिसंयोगाभावीयकपिसंयोगनिष्ठप्रतियोगितानिरूपितसंसर्गतावच्छेदकसमवायत्वावच्छिन्नसंसर्गताकप्रतियोगिसामानाधिकरण्यस्यैव संयोगाभावे सत्त्वेन संयोगनिष्ठप्रतियोगितायाः धारणासंभवात् । निरुक्तान्यतराभावनिष्ठप्रतियोगितायाः धारणसंभवेपि संयोगनिष्ठप्रतियोगितायाः तत्सामानाधिकरण्याभावात् कपिसंयोगी एतद्वृक्षत्वादित्यादौ नाव्याप्तिप्रसंगः । यदि च वृक्षवृत्तित्वविशिष्टत्वावच्छिन्नाभावप्रतियोगिकस्वरूपसंबंधेन वृक्षवृत्तित्वविशिष्टत्वावच्छिन्नाभावप्रमेयत्वोभयाभावस्यापि वृक्षवृत्तिसामान्यस्वरूपस्य तद्वृत्तिकपिसंयोगाभावस्वरूपतया निरुक्तोभयत्वावच्छिन्नप्रतियोगितापि कपिसंयोगाभावनिरूपिता तन्निरूपितसंसर्गता-

वच्छेदकवृक्षवृत्तित्वविशिष्टत्वावच्छिन्नाभावप्रतियोगिकस्वरूपत्वावच्छिन्नसंसर्गताकप्रतियोग्यसामानाधिकरण्यस्य कपिसंयोगाभावे सत्वात्तदीयकपिसंयोगनिष्ठप्रतियोगितायास्तत्प्रतियोगितासमानाधिकरणत्वात्पुनरव्याप्तितादवस्थ्यमिति भाव्यते, तदा तत्प्रतियोगितासामानाधिकरण्यस्थाने तत्प्रतियोगिताव्यापकत्वं निवेशनीयम् । तथा च निरुक्तोभयत्वावच्छिन्नप्रतियोगितायाः तद्व्याप्यत्वाभावेन नाव्याप्तिः । अथैवमपि संयोगेन प्रमेयसाध्यकधूमादिहेतावव्याप्तिः । पर्वतवृत्तित्वविशिष्टत्वावच्छिन्नाभावस्य स्वप्रतियोगिकस्वरूपेण योऽभावः तस्य पर्वतवृत्तिसामान्यस्वरूपस्योत्पत्तिकालावच्छेदेन पर्वतवृत्तिसंयोगेन प्रमेयसामान्याभावस्वरूपतया प्रमेयाभावनिरूपितपर्वतवृत्तित्वविशिष्टाभावनिष्ठप्रतियोगितावच्छेदकस्वरूपसंबंधेन प्रतियोग्यसामानाधिकरण्यस्य संयोगेन प्रमेयाभावे सत्वेन तस्य लक्षणघटकत्वात् । तदीयप्रमेयत्वावच्छिन्नप्रतियोगितायाः प्रमेयमात्रनिष्ठाया उक्तविशिष्टाभावनिष्ठप्रतियोगिताव्यापकतया तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् । तत्प्रतियोगिताव्याप्यत्वमपि प्रतियोग्यसमानाधिकरणहेतुमन्निष्ठाभावप्रतियोगितायां निवेश्य उक्तविशिष्टाभावप्रतियोगितामादाय दोषवारणेऽपि उक्तविशिष्टाभावप्रतियोगिकस्वरूपेण तादृशविशिष्टाभावप्रमेयोभयाभावस्य पर्वतवृत्तिस्वरूपस्य पर्वतवृत्तिसंयोगेन प्रमेयाभावस्वरूपतया तदीयोभयत्वावच्छिन्नप्रतियोगितामादायाव्याप्तिवारणमशक्यमेव । प्रमेयत्वावच्छिन्नप्रतियोगितायां प्रमेयमात्रनिष्ठोभयत्वावच्छिन्नप्रतियोगिताव्याप्यत्वस्याप्यक्षतत्वात् । न च तत्प्रतियोगिताव्याप्यत्वं तत्प्रतियोगिताशून्यावृत्तित्वं निरुक्तोभयत्वावच्छिन्नप्रतियोगिताशून्याप्रसिद्ध्या अप्रसिद्धमिति न तत्प्रतियोगित्वं यत्पदोपादेयमिति नाव्याप्तिरिति वाच्यम् । संयोगेन प्रमेयसाध्यकव्यभिचारिणि साध्याभावीयप्रमेयत्वावच्छिन्नप्रतियोगिताया निरुक्तव्याप्यत्वाप्रसिद्ध्या धारणासंभवेन प्रतियोगित्वांतरसमनियतप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वेनातिव्याप्तिवारणाय स्वाभाववद्वृत्तित्वसंबंधावच्छिन्नतत्प्रति-

योगित्वाभावरूपस्य तत्प्रतियोगितानिष्ठप्रकारतानिरूपिताभावनिष्ठप्रकारता-निरूपिताधिकरणनिष्ठप्रकारतानिरूपितवृत्तित्वप्रकारतानिरूपितविशेष्यता-याः प्रमीयविशेष्यताप्रतियोगिताकस्वरूपेणाभावस्वरूपस्य स्वव्यापकत्वसंबं-धावच्छिन्नतत्प्रतियोगितावृत्तित्वरूपस्य वा तत्प्रतियोगिताव्याप्यत्वस्य वक्त-व्यतया निरुक्तोभयत्वावच्छिन्नप्रतियोगितायाः केवलान्वयित्वेप्युक्ततद्व्या-प्यत्वस्य प्रसिद्ध्या तामादायाव्याप्तेर्दुर्वारत्वात्। मैवम्। स्वीययत्प्रतियोगि-तावच्छेदकसंबंधेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावीयतत्प्र-तियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके निवेश्यम्। न तु तत्प्रतियोगितासमनैयत्यमग्रिमप्रतियोगि-तायां। इत्थं च निरुक्तोभयत्वावच्छिन्ना या प्रमेयाभावनिरूपितप्रतियोगिता तत्समनियतप्रतियोगितावच्छेदकत्वस्य प्रमेयत्वे सत्वेपि तदवच्छेदकतापर्या-प्त्यधिकरणं यन्निरुक्तोभयत्वं तदवच्छिन्नप्रतियोगितावच्छेदकत्वस्य तत्रास-त्वात् न प्रमेयवान् धूमादित्यादावव्याप्तिः। न चैवमपि पर्वतवृत्तित्वविशिष्ट-त्वावच्छिन्नाभावप्रतियोगिकस्वरूपेण प्रमेयसामान्याभावस्य उक्तरीत्या संयो-गेन प्रमेयाभावस्वरूपस्य या उक्तविशिष्टाभावप्रतियोगिकस्वरूपसंबंधावच्छि-न्नप्रमेयत्वावच्छिन्नप्रतियोगिता तदवच्छेदकसंबंधेन प्रतियोग्यसमानाधिक-रणाभावीया तदवच्छेदकप्रमेयत्वावच्छिन्ना च या संयोगेन प्रमेयाभावीयप्र-तियोगिता तदवच्छेदकत्वमादायाव्याप्तितादवस्थ्यमिति वाच्यम्। तत्प्रति-योगितावच्छेदकावच्छिन्नत्वस्थाने तत्प्रतियोगितावच्छेदकसंबंधावच्छिन्न-त्वस्य निवेशात्। उक्तविशिष्टाभावत्व उभयत्व प्रमेयत्वाद्यवच्छिन्नप्रतियोगि-तायाः उक्तविशिष्टाभावप्रतियोगिस्वरूपसंबंधावच्छिन्नतया प्रमेयाभावीयसं-योगसंबंधावच्छिन्नप्रतियोगितायास्तदवच्छेदकसंबंधावच्छिन्नत्वाभावेन ता-दृशप्रतियोगितामादाय दोषाप्रसक्तेः। उक्तविशेषसंबंधावच्छिन्ना या प्रमे-यत्वावच्छिन्ना प्रतियोगिता तदवच्छेदकसंबंधावच्छिन्नप्रतियोगितापदेनापि पुनस्तामेवोपादाय दोषोऽपि समवायेन वह्न्यभावप्रतियोगितामादाय वह्निमान्

वृक्षादित्यादावव्याप्तिवारणेन अग्निमप्रतियोगितायां साध्यतावच्छेदकसंबंधा-
वच्छिन्नत्वविशेषणेनैव वारणीयः । अस्यायमनुगमः । प्रतियोगिताविशिष्टसा-
ध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छि-
न्नसामानाधिकरण्यं व्याप्तिः । प्रतियोगितावैशिष्ट्यं च स्वावच्छेदकसंबंधाव-
च्छिन्नत्व स्वविशिष्टाधेयतानिरूपिताधिकरणतावद्वृत्तित्वाभावबद्धेत्वधिकर-
णवृत्त्यभावनिरूपितत्वोभयसंबंधेन । स्ववैशिष्ट्यं चाधेयतायां स्वनिरूपित-
संसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्व स्वनिरूपकाभावनिरूपितप्रतियो-
गितावच्छेदकधर्मावच्छिन्नत्वोभयसंबंधेनेत्यलमस्थानसंरंभेण ॥२०॥

'प्रतियोगितावच्छेदकसंबंधेन ये ये प्रतियोगिसंबंधिनः तत्तद्व्यक्तित्वा-
वच्छिन्नभेदकूटविशिष्टहेतुमद्वृत्तित्वस्यैव तत्र तत्र वक्तव्यत्वात्' इति जाग-
दीशी ॥ अथ प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वा-
वच्छिन्नप्रतियोगिताकैकभेदस्य हेत्वधिकरणे निवेशेनैव कपिसंयोग्येतद्वृ-
क्षत्वादित्यादौ कपिसंयोगत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः अंततः
ईश्वरज्ञानीयायाः वृक्षेऽव्याप्यवृत्तितया तदवच्छिन्नभेदासत्वेन कपिसंयोग्ये-
तद्वृक्षत्वादित्यादौ कपिसंयोगाभावस्य लक्षणाघटकत्वनिर्वाहे कृतं भेदकूट-
गर्भनिरुक्त्यादरेण । न च धूमाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नप्र-
कारकप्रमीयविशेष्यतायाः अयोगोलके सत्वात् धूमाभावोऽपि धूमवान्
वह्नेरित्यादौ प्रतियोगिव्यधिकरणो न स्यात् । घटत्वाद्यवच्छिन्नप्रकारक-
प्रमीयविशेष्यतामादाय घटाद्यभावस्यापि प्रतियोगिसमानाधिकरणतया
प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव तत्राऽतिव्याप्तिवारणे तुल्ययुक्त्या सर्व-
त्रासंभव इति वाच्यम् । प्रमीयविषयतायाः प्रमसत्तानियतसत्ताकतया
अयोगोलकादौ धूमप्रकारकप्रमाशून्यतादशायां धूमत्वावच्छिन्नप्रकारतानिरू-
पितविशेष्यत्वावच्छिन्नभेदस्य वृक्षादौ कपिसंयोगानधिकरणमूलावच्छेदेन
तादृशाधिकरणत्वावच्छिन्नभेदवत् निराबाधतया धूमाद्यभावस्यापि प्रतियो-
गिव्यधिकरण्योपपत्तेः । न चैवं गुणकर्मान्यत्वविशिष्टसत्ताभावस्य व्याप्तेरव्या-

द्यन्तिव्याप्तिः । विशिष्टसत्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारता-निरूपितविशेष्यतायाः गुणकर्मान्यत्वोपलक्षितसत्तावान् गुण इति प्रमी-यायाः गुणादौ सर्वदा सत्त्वेन विशिष्टसत्ताभावस्य प्रतियोगिवैयधिकरण्या-संभवेन घटाद्यभावस्यैव तथात्वेन तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् कालिकादिसंबंधेन धूमादिप्रकारकप्रमीयविशेष्य-तामादाय धूमाभावस्य प्रतियोगिवैयधिकरण्यानुपपत्त्या धूमसाध्यकवह्नि-तावन्तिव्याप्तिवारणाय प्रकारतायां अवश्यं निवेशनीयप्रतियोगितावच्छेदक-संबंधावच्छिन्नत्वविशेषणेन गुणकर्मान्यत्वोपलक्षितसत्तावान् गुण इति प्रमीयप्रकारतायाः शुद्धसमवायसंबंधावच्छिन्नायाः विशिष्टाभावप्रतियोगिता-वच्छेदकविशिष्टप्रतियोगिकसमवायसंबंधावच्छिन्नत्वाभावेन वारणात् । तन्निरूपितविशेष्यतामादाय न विशिष्टसत्ताभावस्य प्रतियोगिवैयधिकरण्या-नुपपत्तिः । विशिष्टाभावस्यापि शुद्धसमवायसंबंधावच्छिन्नप्रतियोगिताकत्वे उपलक्षितविशिष्टाभावयोरवैलक्षण्यप्रसंगात्, इति न युक्तम् । एकत्वप्रागा-भावविशिष्टघटत्वावच्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या एकत्वप्रागभाववि-शिष्टघटाभावतदुपलक्षितघटाभावयोः तादृशविशिष्टप्रतियोगिकसंयोगसंबं-धावच्छिन्नप्रतियोगिताकत्वशुद्धसंयोगसंबंधावच्छिन्नप्रतियोगिताकत्वाभ्यां वैलक्षण्यस्य दुरुपपादतया विशिष्टाभावप्रतियोगित्व उपलक्षिताभावप्रतियो-गित्वयोः विशेषणविशेष्योभयपर्याप्तत्वविशेष्यमात्रपर्याप्तत्वाभ्यामेव तयोर्वै-लक्षण्यस्य वक्तव्यतया शुद्धसमवायस्यैव विशिष्टाभावप्रतियोगितावच्छेदक-संबंधत्वेन तदवच्छिन्नोपलक्षितसत्तानिष्ठप्रकारतानिरूपितविशेष्यतायाः गुणादौ सार्वदिकत्वेन विशिष्टसत्ताभावस्य प्रतियोगिवैयधिकरण्यानुपपत्ति-तादवस्थ्यात् । अन्यथा प्रतियोगितावच्छेदकनिवेशोपि नैष्फल्यं भजेत् । विशिष्टाभावस्य विशिष्टप्रतियोगिकसमवायेन सहजत एव प्रतियोगिव्यधिक-रणत्वादिति वाच्यम् । प्रतियोगितावच्छेदकनिष्ठा या स्वप्रतियोगितावच्छेद-कसंबंधनिष्ठकिंचिन्निष्ठप्रतियोगितावच्छिन्नप्रतियोगिताकत्वावच्छिन्नसंसर्गताकप्रकारता

तन्निरूपितविशेष्यत्वावच्छिन्नप्रतियोगिताकभेदस्य विशिष्टसाध्यकानुमित्यौपयिकव्याप्तिशरीरे हेत्वधिकरणविशेषणतया निवेशात् । तथा च विशिष्टसत्तावान् गुण इति ज्ञानस्य स्वावच्छिन्नप्रतियोगिकसमवायेन विशिष्टसत्तापारतंत्र्येण विशिष्टसत्ताप्रकारकस्य भ्रमतया तच्छून्यकालावच्छेदेन स्वप्रतियोगितावच्छेदकविशिष्टसत्तात्वनिष्ठनिरुक्तसंसर्गताकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नभेदस्य हेत्वधिकरणे गुणे सत्वेन विशिष्टसत्ताभावस्य प्रतियोगिवैयधिकरण्यनिर्वाहः । न चोपलक्षितसत्तासाध्यकजात्यादिहेतावव्याप्तिः । विशिष्टाभावप्रतियोगितावच्छेदकं यद्विशिष्टसत्तात्वं तन्निष्ठोक्तसंसर्गताकप्रकारतानिरूपितविशेष्यतायाः गुणो विशिष्टसत्तावानिति भ्रमीयायाः सत्वेपि तच्छून्यकालावच्छेदेन तदवच्छिन्नभेदस्य गुणादौ सत्वेन विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणत्वादिति वाच्यम् । उपलक्षितसाध्यकानुमित्यौपयिकव्याप्तिशरीरे प्रतियोगितावच्छेदकसंबंधावच्छिन्नप्रतियोगिनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नभेदस्यैव हेत्वधिकरणे निवेशेन अनुपपत्त्यभावात् । तादृशव्याप्तेः विशिष्टसाध्यकजात्यादिहेतौ सत्वेपि न क्षतिः । तद्ज्ञानस्य उपलक्षितवैशिष्ट्यावगाह्यनुमितावेव हेतुतया ततः जात्यादिहेतुना अभ्रान्तस्य गुणे विशिष्टवैशिष्ट्यावगाह्यनुमितेरापादयितुमशक्यत्वात् । न चैवं शब्दाननुगमः । क्षत्यभावात् । पूर्वे जगदीशेनैव विशिष्टाविशिष्टसाध्यकस्थलीयलक्षणशरीरे साध्यतावच्छेदकतावच्छेदकतदितरानवच्छिन्नत्वानिरवच्छिन्नत्वादिविशेषणनिवेशकृता शब्दानुगमस्य परित्यक्तत्वादिति । भेदकूटनिवेशकृन्मतेपि प्रतियोगितावच्छेदकसंबंधेन प्रतियोगिसंबंधिनो ये ये तत्तद्भेदकूटघटितव्याप्तिरेव उपलक्षितसाध्यकानुमित्यौपयिकी वाच्या । अन्यथा विशिष्टसत्ताभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्नसंबंधितायाः गुणेऽसत्वेन तथाविधसंबंधितावद्द्रव्यभेदकूटस्य तत्र सत्वेन विशिष्टसत्ताभावस्य प्रतियोगिव्यधिकरणतया अभ्रान्तस्य जातिलिंगकोपलक्षितसत्तासाध्यकानुमित्यनुपपत्तेः । तथाच तन्मतेपि शब्दाननुगमस्य दुर्वारत्वाच ।

मैवम् । अव्याप्यवृत्तिमद्भेदस्य व्याप्यवृत्तितानये उक्तरीत्या परिष्कारे व्यभिचारिण्यतिव्याप्तिवारणेपि तस्य व्याप्यवृत्तितानये साध्यप्रकारकभ्रमीयविशेष्यतायाः व्यभिचारनिरूपकाधिकरणे सत्वेन तदवच्छिन्नभेदस्य कालभेदावच्छेदेनापि यत्राधिकरणे व्यभिचारः तत्रासत्वात् साध्याभावस्य लक्षणघटकत्वानुपपत्त्या व्यभिचारिण्यतिव्याप्तिः तस्याव्याप्यवृत्तितामतेपि साध्यशून्ये त्रिचतुरादिकतिपयक्षणमात्रस्थायिनि यद्धर्मिणि स्वसत्तासमकालं साध्यस्य भ्रमः तदंतर्भावेणैव व्यभिचारिणि हेतौ साध्याभावस्य क्वापि हेत्वधिकरणे निरुक्तप्रतियोगिवैयधिकरण्यासंभवेनातिव्याप्तिः । अतः मतद्वय एव लक्षणकरणे तद्वारणाय प्रमीयत्वं प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतायां देयं, आंशिकप्रमात्वमादाय प्रसक्तदोषवारणाय स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तन्निरूपकत्वाभावकूटवत्वरूपं प्रमात्वं तत्र निवेशनीयं; तथा च कूटनिवेशनमुभयत्र समानमेव प्रमात्वघटकेतरांशनिवेशेन गौरवं पुनरतिरिच्यतएव । न च प्रमात्वं न भेदगर्भं किंतु प्रकारताविशिष्टविशेष्यतानिरूपकत्वसामान्याभावः वैशिष्ट्यं च स्वनिरूपितत्वस्वविशिष्टप्रतियोगिताकाभाववद्वृत्तित्वोभयसंबंधेन । प्रतियोगितायां स्ववैशिष्ट्यं च स्वावच्छेदकसंबंधावच्छिन्नत्वस्वावच्छेदकावच्छिन्नत्वोभयसंबंधेनेति भेदकूटनिवेशेन लाघवमिति वाच्यम् । अस्मन्मतेपि प्रतियोगितावच्छेदकावच्छिन्नसंबंधिनिष्ठोभयावृत्तिधर्मत्वेन तादृशसंबंधिनिष्ठतत्तद्व्यक्तित्वान्यनुगमय्य तादृशधर्मत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकैकभेदस्यैव निवेशसंभवेन गौरवाभावात् । परंतु प्रमात्वाद्यनिवेशेन लाघवमेवेति सर्वमनवद्यम् ॥२१॥

'यत्किंचित्प्रतियोगित्वं यादृशसंबंधावच्छिन्नं तादृशसंबंधेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत्साधनाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव लक्षणे निवेशनीय'मिति जागदीशी ॥ न च कपिसंयोगाभावविशिष्टघटाभावस्य

यः स्वरूपेणाभावः कपिसंयोगाभावानवच्छेदकशाखाद्यवच्छेदेन वृक्षवृत्ति-
स्तस्य स्वरूपेण साध्यतायामेतद्वृक्षत्वादिहेतावव्याप्तिः, साध्याभावस्य विशि-
ष्टघटाभावस्वरूपस्य स्वीया या घटनिष्ठा प्रतियोगिता तदवच्छेदकसंयोगेन
प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्तितया तदी-
यसाध्यनिष्ठप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति वाच्यम्।
स्वीयस्वप्रतियोगितावच्छेदकसंबंधेन प्रतियोगितावच्छेदकावच्छिन्नसामा-
न्यानधिकरणहेत्वधिकरणवृत्तिसाध्यतावच्छेदकसंबंधावच्छिन्ना प्रतियोगि-
ताकाभावीया तत्प्रतियोगितासमानाधिकरणा च या प्रतियोगिता तदनवच्छे-
दकत्वस्य साध्यतावच्छेदके निवेशात्। इत्थं चोक्तस्थले घटनिष्ठप्रतियोगिता-
मादाय साध्याभावस्य प्रतियोगिवैयधिकरण्येपि तदीयसाध्यनिष्ठप्रतियोगि-
तायाः तत्सामानाधिकरण्यविरहान्न साध्याभावमादाय दोषः। हेतुमन्निष्ठा-
भावीयप्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वमपहाय हेतुमन्निष्ठा-
भावे तत्संबंधावच्छिन्नप्रतियोगिताकत्वनिवेशात्। स्वरूपेण किंचित्साध्यकस-
द्धेतौ संयोगादिसंबंधावच्छिन्नघटादिनिष्ठप्रतियोगितामादायैव तदभावस्य
प्रतियोगिवैयधिकरण्यस्योपपादनीयतया तदीयतत्समानाधिकरणप्रतियोगि-
तायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वाभावेपि न क्षतिः। घटाद्यभावे पूर्व-
क्षणवृत्तित्वविशिष्टस्वाभावनिष्ठतादृशसंबंधावच्छिन्नप्रतियोगिताकत्वस्यास-
त्वात्। अथैवमपि कर्मत्वप्रकारकज्ञानविशेष्यत्वविशिष्टस्य संयोगेन प्रमेया-
भावस्य योऽभावः कर्मत्वभ्रमशून्यतादशायां गुणवृत्तिः तस्य स्वरूपेण साध्य-
तायां गुणत्वादिहेतावव्याप्तिः। साध्याभावस्य स्वीया या प्रमेयनिष्ठप्रतियो-
गिता तदवच्छेदकसंबंधेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्व-
धिकरणगुणवृत्तितया तदीयसाध्यनिष्ठप्रतियोगितायां प्रमेयमात्रनिष्ठतत्प्रति-
योगितासामानाधिकरण्यस्यापि सत्वात्। साध्यस्यापि प्रमेयत्वात्। न च
तत्प्रतियोगितासामानाधिकरण्यस्थाने तत्प्रतियोगिताव्यापकत्वमेव निवेश-
नीयम्। तथा चोक्तस्थले प्रमेयनिष्ठप्रतियोगितामादाय साध्याभावस्य

निरुक्तप्रतियोगिवैयधिकरण्येपि तदीयसाध्यनिष्ठप्रतियोगितायाः तदव्यापकतया नाव्याप्तिरिति वाच्यम् । एवमपि कपिसंयोगाभावविशिष्टघटाभावस्य स्वरूपेण योऽभावः तादृशाभावप्रमेयोभयस्य स्वरूपेण साध्यतायां एतद्वृक्षत्वादिहेतावव्याप्तेर्दुर्वारत्वात् । उक्तोभयत्वावच्छिन्नाभावस्यापि विशिष्टघटाभावस्वरूपस्य स्वीया या घटनिष्ठा प्रतियोगिता तदवच्छेदकसंयोगसंबंधेन स्वप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तितया तदीयोक्तोभयत्वावच्छिन्नप्रतियोगितायाः घटनिष्ठप्रतियोगिताव्यापकत्वस्यापि सत्वात् । न च तत्प्रतियोगिताव्याप्यत्वस्यापि अग्रिमप्रतियोगितायां निवेशात् उक्तस्थले साध्याभावीयनिरुक्तोभयत्वावच्छिन्नप्रतियोगितायां तदीयघटत्वावच्छिन्नप्रतियोगिताव्याप्यत्वविरहेण न साध्याभावमादायाव्याप्तिरिति वाच्यम् । तथापि कर्मत्वप्रकारकज्ञानविषयत्वविशिष्टस्य संयोगेन प्रमेयाभावस्याभावप्रमेयोभयस्य स्वरूपेण साध्यतायामव्याप्तेर्दुरुद्धरत्वात् । उक्तोभयाभावस्य विशिष्टप्रमेयाभावस्वरूपस्य स्वीया या प्रमेयनिष्ठा प्रतियोगिता तदवच्छेदकसंयोगेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तितया तदीयनिरुक्तोभयत्वावच्छिन्नप्रतियोगितायास्तत्प्रतियोगितासमनैयत्यस्याप्यक्षतत्वात् । मैवम् ॥ स्वीययत्प्रतियोगित्वं यादृशसंबंधावच्छिन्नं तादृशसंबंधेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिकरणवृत्तिसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकाभावीयतत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके निवेशात् । तथा च कपिसंयोगाभावविशिष्टघटाभावाभावत्वावच्छिन्नस्य तादृशाभावप्रमेयोभयत्वावच्छिन्नस्य वा साध्यतायां घटप्रतियोगितामादाय प्रतियोगिवैयधिकरण्येपि तदीयसाध्यनिष्ठप्रतियोगितायाः तदवच्छेदकधर्मावच्छिन्नत्वविरहेण नाव्याप्तिः । एवमेव कर्मत्वप्रकारकज्ञानविशेष्यत्वविशिष्टप्रमेयाभावाभावत्वावच्छिन्नस्य तादृशाभावप्रमेयोभयत्वावच्छिन्नस्य वा साध्यतायां निरुक्तसद्धेतावव्याप्तिवारणमपि बोध्यम् ॥ यदि च कर्मत्वप्रकारकज्ञानविषयत्वविशिष्टप्रमेयाभावाभाव-

प्रतियोगिकस्वरूपेण प्रमेयस्य साध्यतायां गुणत्वहेतावव्याप्तिः। उक्तसंबंधेन प्रमेयाभावस्यापि विशिष्टसंयोगेन प्रमेयाभावरूपस्य स्वीया या संयोगसंबंधावच्छिन्नप्रमेयत्वावच्छिन्ना प्रतियोगिता तामादाय हेत्वधिकरणे प्रतियोगिव्यधिकरणतया तदीयोक्तसाध्यतावच्छेदकसंबंधावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायां तदवच्छेदकावच्छिन्नत्वस्यापि सत्वात्। तत्प्रतियोगितावच्छेदकावच्छिन्नत्वमपहाय तत्प्रतियोगितावच्छेदकसंबंधावच्छिन्नत्वस्य अग्रिमप्रतियोगितायां निवेशेन साध्यतावच्छेदकसंबंधावच्छिन्नप्रमेयनिष्ठप्रतियोगिताया वारणेपि तत्प्रतियोगितावच्छेदकसंबंधावच्छिन्नप्रतियोगितापदेनापि तामेवोपादायाव्याप्तिर्दुर्वारैव। एवं यत्र घटाभावस्य स्वरूपेण साध्यतायामात्मत्वहेतावव्याप्तिः कालिकेन साध्याभावस्य स्वीयघटाभावनिष्ठकालिकसंबंधावच्छिन्नप्रतियोगितामादाय हेत्वधिकरणे आत्मनि प्रतियोगिव्यधिकरणतया पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठसाध्यतावच्छेदकस्वरूपसंबंधावच्छिन्नप्रतियोगिताकतया च तदीयकालिकसंबंधावच्छिन्नसाध्यनिष्ठप्रतियोगितायास्तत्प्रतियोगितावच्छेदकसंबंधावच्छिन्नत्वात्। पूर्वोक्तयुक्त्या अग्रिमप्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वस्य निवेशासंभवादिति विभाव्यते; तदा प्रतियोगितयोरेकसंबंधावच्छिन्नत्वादिकं अभावे साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वं चापहाय स्वीययत्प्रतियोगित्वं यादृशसंबंधावच्छिन्नमित्यत्र प्रतियोगित्वे साध्यतावच्छेदकसंबंधातिरिक्तसंबंधावच्छिन्नत्व साध्यतावच्छेदकसंबंधेन वृत्तिमत्साध्यनिष्ठत्वोभयाभाववत्वं अग्रिमप्रतियोगितायां तत्प्रतियोगिताव्याप्यत्वं च निवेश्य लक्षणं परिष्करणीयं। तथा च साध्यतावच्छेदकसंबंधातिरिक्तसंबंधावच्छिन्नत्वनिरुक्तसाध्यनिष्ठत्वोभयाभाववत्स्वीययत्प्रतियोगितावच्छेदकसंबंधेन [illegible]प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणहेत्वधिक[illegible] त्य[illegible]यत्प्रतियोगिताव्याप्यप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदकं विशेषणं [illegible]. तथा च घटाभाववानात्मत्वादित्यादौ कालिकेन

साध्याभावस्य या कालिकसंबंधावच्छिन्नप्रतियोगिता तस्यां निरुक्तोभयसत्वेन न तामादायाव्याप्तिः। विशिष्टप्रमेयाभावाभावादिसाध्यकोक्तसद्धेतौ साध्याभावीयप्रमेयनिष्ठप्रतियोगितावारणमपि एवमेव बोध्यम्। साध्ये साध्यतावच्छेदकसंबंधेन वृत्तिमत्वविशेषणात् कपिसंयोगाभावप्रमेयोभयस्य स्वरूपेण साध्यतायां सद्धेतौ निरुक्तप्रतियोगित्वाप्रसिद्ध्या पुनर्नाव्याप्तिः। संबंधसामान्येन तदुभयस्य व्याप्यवृत्तितया तत्संबंधेन तत्साध्यके प्रतियोगिवैयधिकरण्यनिवेशेन निरुक्तोभयाभाववत्प्रतियोगित्वाप्रसिद्धावपि न क्षतिः। तत्प्रतियोगिताव्याप्यत्वनिवेशात् कपिसंयोगाभावविशिष्टघटाभावाभावप्रमेयोभयस्य स्वरूपेण साध्यतायां साध्याभावीयघटनिष्ठप्रतियोगितामादाय नाव्याप्तिरिति ध्येयम् ॥२२॥

स्वप्रतियोगितावच्छेदकं यत्किंचित्तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे निवेशकल्पे कपिसंयोगाभाववानात्मत्वादित्यादौ गुणसामान्याभावस्वरूपस्वप्रतियोगितावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वमादाय साध्याभावस्य लक्षणघटकत्वमुपपाद्य अव्याप्तिरभिहिता दीधितिकृता॥ अत्रेयमाशंका॥ वह्निमान् धूमादित्यादावपि पर्वतवृत्तित्वविशिष्टस्य यः स्वरूपेणाभावः तदभावस्य पर्वतवृत्तिसामान्यस्वरूपस्य अव्याप्यवृत्तितया तद्वृत्तिवह्न्यभावस्वरूपतायामविवादात् स्वप्रतियोगितावच्छेदकं यत्पर्वतवृत्तित्वविशिष्टत्वावच्छिन्नप्रतियोगिताकाभावत्वं स्वप्रतियोगितावच्छेदकस्वरूपेण तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणपर्वतादौ सत्वेन वह्न्यभावस्यापि लक्षणघटकत्वात् अव्याप्तिसंभवे तादृशप्रसिद्धस्थलं परित्यज्य स्थलांतरानुसरणे किं बीजं?। न च संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमते वह्न्यभावस्य पर्वतादिवृत्तित्वेपि तस्य अतथात्वमते पर्वतवृत्तिमव्याप्रवेशेन पर्वतवृत्तित्वविशिष्टत्वावच्छिन्नाभावत्वं न वह्न्यभावप्रतियोगितावच्छेदकमिति न तादृशधर्ममादाय तस्य प्रतियोगिवैयधिकरण्यमिति सर्वमतसाधारण्येन दोषदानाय प्रसिद्धस्थलोपेक्षेति वाच्यम्। तन्मते वह्न्यभावस्य स्वरूपेण पर्वतावृत्तित्वेपि

कालिकसंबंधेन तद्वृत्तितया कालिकसंबंधावच्छिन्नपर्वतनिरूपितवृत्तित्ववि-
शिष्टत्वावच्छिन्नाभावत्वं वह्न्यभावप्रतियोगितावच्छेदकमेवेति तदवच्छिन्ना-
नधिकरणत्वस्य पर्वतादौ सत्वेन वह्न्यभावस्य लक्षणघटकतया दुर्वारत्वात् ।
न च प्रतियोगितावच्छेदकसंबंधेन प्रतियोग्यनधिकरणत्वकल्पे प्रसिद्धस्थले
अव्याप्तिसंभवेपि साध्यतावच्छेदकसंबंधेन तन्निवेशकल्पे पर्वतीयवृत्तित्व-
विशिष्टत्वावच्छिन्नाभावत्वावच्छिन्नस्य साध्यतावच्छेदकसंयोगेन संबंधा-
प्रसिद्ध्या न तादृशधर्ममादाय वह्न्यभावस्य प्रतियोगिवैयधिकरण्यमिति
वाच्यम् । एवमपि स्वरूपेण स्वाधिकरणे स्वरूपसंयोगान्यतरसंबंधेन वृत्ति-
त्वात्मकस्वसामानाधिकरण्यसंबंधेन पर्वतवृत्तित्वविशिष्टत्वावच्छिन्नाभाव-
विशिष्टं यत् स्वरूपेण तदभावस्यापि पर्वतवृत्तिसामान्यस्वरूपतया स्वप्रति-
योगितावच्छेदकं यन्निरुक्तसामानाधिकरण्यसंबंधेन पर्वतवृत्तित्वविशिष्टत्वाव-
च्छिन्नाभावविशिष्टत्वं तदवच्छिन्नस्य महानसीयवह्न्यादेः संयोगेनाधि-
करणत्वप्रसिद्ध्या वह्न्यभावस्य लक्षणघटकतया दुर्वारात् । न च जन्यमा-
त्रस्य कालोपाधित्वानुपगमे पर्वतनिरूपितकालिकसंबंधावच्छिन्नवृत्तित्वा-
प्रसिद्ध्या न तद्विशिष्टत्वावच्छिन्नाभावत्वमादाय वह्न्यभावस्य प्रतियोगि-
वैयधिकरण्यसंभव इति तन्मतसाधारण्येनापि दोषदानायायमुद्यम इति
वाच्यम् । एवमपि पर्वतह्रदएतदन्यतरनिरूपितस्वरूपसंबंधावच्छिन्नवृत्ति-
ताविशिष्टत्वावच्छिन्नाभावत्वमादाय तस्य प्रतियोगिवैयधिकरण्यात् । न
च स्वभिन्नानिरूपितप्रतियोगितावच्छेदकमेव स्वप्रतियोगितावच्छेदकत्व-
त्किंचिद्धर्मपदेन विवक्षणीयं । इत्थं च पर्वतवृत्तित्वविशिष्टत्वावच्छिन्ना-
भावनिष्ठप्रतियोगितायाः पर्वतवृत्तिसामान्यनिरूपितायास्स्वाभिन्नपर्वतवृत्ति-
घटाद्यभावनिरूपिततया न तदवच्छेदकधर्ममादाय वह्न्यभावस्य प्रतियोगि-
वैयधिकरण्यमिति वाच्यम् । तथा सति गुणसामान्याभावत्वस्यापि कपिसंयो-
गभिन्नरूपादिगुणानिरूपितप्रतियोगितायामेवावच्छेदकत्वेन तादृशधर्ममा-
दाय वृक्षादिवृत्तिं कपिसंयोगात्मकसाध्याभावस्य प्रतियोगिवैयधिकरण्येन

पादनस्य संदर्भविरोधापत्तेः। जात्यभाववान् प्रमेयत्वादित्यादौ स्वत्वस्याननुगतत्वेन निखिलजातीनां स्वपदेनोपादानासंभवात्। यत्किंचिज्जातेरुपादाने स्वभिन्नजात्यंतरानिरूपितत्वस्य जात्यभावनिष्ठप्रतियोगितायामसत्त्वेन तादृशप्रतियोगित्वाप्रसिद्ध्या जात्यभावाभावस्य लक्षणाघटकत्वेन अतिव्याप्तिप्रसंगाच्च। न च स्वपदेन घटत्वस्योपादाने जात्यभावनिष्ठप्रतियोगितायाः स्वभिन्नानिरूपितत्वविरहेऽपि घटत्वाभावनिष्ठप्रतियोगितायां तत्सत्त्वेन तदवच्छेदकघटत्वाभावत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणघटे सत्त्वेन जात्यात्मकाभावस्य लक्षणघटकत्वेन नोक्तस्थलेऽतिव्याप्तिरिति वाच्यम्। एवमपि द्रव्ये संयोगसामान्याभावानभ्युपगंतृप्राचीनमते संयोगसामान्याभावसाध्यकव्यभिचारिण्यतिव्याप्तिः। संयोगसामान्याभावनिष्ठप्रतियोगितायाः तत्तत्संयोगभिन्नानिरूपितत्वविरहात्। तत्तत्संयोगाभावनिष्ठप्रतियोगितायाः तथात्वेऽपि तदवच्छेदकावच्छिन्नानधिकरणत्वस्याप्रसिद्ध्या साध्याभावस्य लक्षणाघटकत्वात्। न च स्वावृत्तिपदार्थविभाजकोपाध्यधिकरणानिरूपितप्रतियोगितावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेत्वधिकरणे विवक्षितं। इत्थं च जात्यभावनिष्ठप्रतियोगितायाः यत्किंचिज्जात्यवृत्तिपदार्थविभाजकोपाध्यधिकरणानिरूपिततया तदवच्छेदकावच्छिन्नानधिकरणत्वमादाय जात्यात्मकाभावस्योक्तस्थले लक्षणघटकत्वनिर्वाहः। वह्निमान् धूमादित्यादौ वह्न्यभाववृत्तिपदार्थविभाजकोपाध्यधिकरणप्रतियोगित्वाधिकरणत्वादिनिरूपितत्वेन पर्वतवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितायाः लक्षणाघटकतया न तामादाय वह्न्यभावस्य प्रतियोगिवैयधिकरण्यं। एवं कपिसंयोगावृत्तिपदार्थविभाजकोपाधिर्न गुणत्वं अपितु द्रव्यत्वादिकं तदाश्रयनिरूपितप्रतियोगितावच्छेदकं गुणसामान्याभावत्वं भवतीति तादृशधर्ममादाय दीधितिकृतां कपिसंयोगात्मकाभावस्य प्रतियोगिवैयधिकरण्योपपादनसंगच्छतेति वाच्यम्। एवमपि पर्वतहृदएतदन्यतरनिरूपितवृत्तिताविशिष्टअभावत्वावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रतियोगितायाः निरुक्तान्यतर-

वृत्तिअभावमात्रनिरूपितायाः वह्न्यभावावृत्तिपदार्थविभाजकोपाध्यधिकरण-प्रतियोगित्वाद्यनिरूपितत्वेन तदवच्छेदकधर्मावच्छिन्नानधिकरणत्वस्य पर्वतादौ सत्वेन वह्न्यभावस्य लक्षणघटकत्वापत्तेर्दुर्वारत्वात्। प्राचां मते संयोगाभावस्येव संयोगकर्मएतदन्यतरत्वावच्छिन्नाभावस्यापि द्रव्ये असत्वात् । तत्साध्यकमेयत्वादावतिव्याप्तिश्च । साध्यनिष्ठप्रतियोगितायाः संयोगावृत्तिकर्मत्वरूपनिरुक्तोपाधिमत्कर्मनिरूपितत्वेन कर्मावृत्तिगुणत्वरूपनिरुक्तोपाधिमत्संयोगानिरूपितत्वेन लक्षणाघटकतया तत्संयोगाभावनिष्ठप्रतियोगितायाः तथात्वेपि तदवच्छेदकावच्छिन्नानधिकरणाप्रसिद्ध्या साध्याभावस्य लक्षणाघटकत्वात्। इति चेदत्रोच्यते। पर्वतह्रदएतदन्यतरवृत्तित्ववैशिष्ट्याभावत्वधर्मद्वयावच्छिन्नप्रतियोगिताकाभावाभावो न निरुक्तान्यतरवृत्त्यभावरूपः। तेषामनंतत्वेन गौरवात्। किंतु निरुक्तान्यतरत्वस्वरूप इति निरुक्तान्यतरवृत्तित्वविशिष्टाभावाभावत्वस्य वह्न्यभावनिरूपितप्रतियोगितावच्छेदकत्वासंभवेन न तादृशधर्ममादाय वह्न्यभावस्य प्रतियोगि-वैयधिकरण्यमिति प्रसिद्धस्थलोपेक्षा ॥२३॥

'अत्र वदंति ; प्रतियोगिस्वरूपं अवच्छेदकस्वरूपं वा यत्प्रतियोगित्वं तदपि कस्यचिदभावस्य केनचिदेव धर्मेण संबंधेन चावच्छिन्नं व्यवहारबलात् न तु सर्वेण धर्मेण संबंधेन वा समवायावच्छिन्नवह्न्यभावप्रतियोगित्वं संयोगसंबंधावच्छिन्नमिति व्यवहाराभावा'दिति जागदीशी ॥ अत्र च कस्यचिदभावस्येत्यत्र षष्ठ्यर्थो निरूपितत्वं तस्य तच्छब्दार्थप्रतियोगितायामन्वयः तथा च यत्किंचिदभावनिरूपितत्वविशिष्टप्रतियोगित्वं यत्किंचिद्धर्मनिष्ठावच्छेदकतानिरूपकं यत्किंचित्संबंधनिष्ठावच्छेदकतानिरूपकमेव न तु अवच्छेदकस्वरूपप्रतियोगितावच्छेदकीभूतयावत्संबंधनिष्ठावच्छेदकतानिरूपकं। प्रतियोगिस्वरूपप्रतियोगितावच्छेदकयावद्धर्मनिष्ठावच्छेदकतानिरूपकं चेत्यर्थः। वह्नित्वस्वरूपप्रतियोगितानिष्ठं समवायेन वह्न्यभावानिरूपितत्वं तन्निष्ठसमवायनिष्ठसंसर्गतानिरूपकतायामेवावच्छेदकं न तु तादृशप्रतियोगिता-

यामबाधितायामपि संबंधांतरनिष्ठसंसर्गतानिरूपकतायां धर्मांतरनिष्ठावच्छे-दकतानिरूपकतायां वेति यावत् । अन्यथा, समवायेन वह्न्यभावप्रतियो-गितायाः संयोगसंबंधावच्छिन्नवह्नित्वस्वरूपप्रतियोगितातोऽभिन्नतया यथा-श्रुते असंगत्यापत्तेः । समवायेन वह्न्यभावप्रतियोगितात्वादेः संयोगादिनि-ष्ठसंसर्गतानिरूपकतानवच्छेदकत्वे युक्तिमाह । समवायावच्छिन्नवह्न्यभावप्र-तियोगित्वं संयोगसंबंधावच्छिन्नमित्यादिव्यवहाराभावादिति । समवायेन वह्न्यभावीयत्वादेः संयोगादिनिष्ठसंसर्गतानिरूपकतावच्छेदकत्वे समवायेन वह्न्यभावप्रतियोगित्वं संयोगसंबंधावच्छिन्नमित्यादिव्यवहारः प्रमाणं स्या-दित्यर्थः । न च समवायेन वह्न्यभावीयत्वादेस्संयोगावच्छेद्यतानवच्छेदक-त्वेपि तत्र तदनवगाहिप्रतियोगितायां संयोगसंबंधावच्छिन्नत्वावगाहिबो-धस्य उक्तवाक्यजन्यस्य प्रमात्वेन उक्तव्यवहारस्य प्रामाण्यापत्तिर्दुर्वारैवेति वाच्यम् । धर्मितावच्छेदकसमवायेन वह्न्यभावीयत्वविधेयीभूतसंयोगावच्छि-न्नत्वयोः अवच्छेद्यावच्छेदकभावानवगाहिबोधस्योक्तवाक्यादनभ्युपगमेन प्रामाण्यापत्तेरयोगात् ॥ इति ॥२४॥

'तथा च यदभावीययत्प्रतियोगितावच्छेदकसंबंधेन यदभावीयत्प्रति-योगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासंबंधित्वं हेतुमतः तदभावीय-तत्प्रतियोगितानिरूपितावच्छेदकताशून्यत्वं साध्यतावच्छेदके विवक्षितमि-त्यदोष' इति जागदीशी ॥ यदभावीयत्वावच्छिन्नयत्प्रतियोगितानिष्ठनिरू-पकताकसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताका यदभावीयत्वावच्छिन्नय-त्प्रतियोगितानिष्ठनिरूपकताकावच्छेदकतावद्धर्मावच्छिन्ना च या आधेयता तन्निरूपिताधिकरणतावद्भिन्नं हेत्वधिकरणं तत्प्रतियोगितानिष्ठसाध्यताव-च्छेदकसंबंधनिष्ठसंसर्गतानिरूपकतावच्छेदकं यत्तदभावीयत्वं तदवच्छिन्न-तत्प्रतियोगितानिष्ठनिरूपकताकावच्छेदकताशून्यं यत्साध्यतावच्छेदकं तद-वच्छिन्नसामानाधिकरण्यं व्याप्तिरिति तदर्थः । संसर्गतानिरूपकतायां यत्प्र-तियोगित्वनिष्ठत्वानिवेशात् कालिकेन वाच्यत्वाभावस्य पूर्वक्षणवृत्तित्ववि-

शिष्टस्वाभावनिष्ठप्रतियोगितावच्छेदकस्वरूपसंबंधेन वाच्यत्वहेतुप्रतियोगि-
समानाधिकरणत्वेपि कालिकेन वाच्यत्वसाध्यकव्यभिचारिणि नातिव्याप्तिः
धर्मत्वाख्यावच्छेदकतानिरूपकतायां यत्प्रतियोगितानिष्ठत्वनिवेशात् घटा-
धिकरणताद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगितावच्छेद-
कधर्मावच्छिन्नसमानाधिकरणत्वेपि स्वरूपेण किंचित्साध्यकसद्धेतौ न प्रति-
योगिव्यधिकरणाभावाप्रसिद्धिः। प्रतियोगितायां साध्यतावच्छेदकसंबंधाव-
च्छिन्नत्वमपहाय तदभावीयत्वे साध्यतावच्छेदकसंबंधनिष्ठसंसर्गतानिरूपक-
तावच्छेदकत्वनिवेशात्। समवायेन वह्न्यभावप्रतियोगितायां वह्नित्वरूपायां
संयोगावच्छिन्नवह्नित्वरूपप्रतियोगित्वाभेदेन संयोगसंबंधावच्छिन्नत्वेपि
समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यादौ नाव्याप्तिः। तत्प्रति-
योगितानिष्ठत्वस्य संसर्गतानिरूपकतायां निवेशात् स्वरूपेण शब्दाधिकरण-
त्वसाध्यकगगनत्वहेतौ कालिकेन साध्याभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वा-
भावनिष्ठस्वरूपसंबंधनिष्ठसंसर्गतानिरूपकतावच्छेदकस्वानिरूप्यत्वकत्वेपि ना
व्याप्तिः। अवच्छेदकतायां तदभावीयत्वावच्छिन्नानिरूपकताकत्वानिवेशात्त-
द्वह्नित्वावच्छिन्नाभावस्य निरुक्तप्रतियोगिव्यधिकरणस्य या तद्वह्निस्वरूप-
प्रतियोगिता तस्याः वह्निसामान्याभावीयतत्तद्वह्निस्वरूप वह्नित्वावच्छिन्न-
प्रतियोगित्वाभेदेन वह्नित्वस्य तदवच्छेदकत्वेपि न क्षतिः। तदभावीयत्वा-
वच्छिन्ननिरूपकतायां तत्प्रतियोगितानिष्ठत्वनिवेशात् कपिसंयोगाभाववा-
नात्मत्वादित्यादौ गुणसामान्याभावनिष्ठप्रतियोगितामादाय प्रतियोगिव्य-
धिकरणो यः कपिसंयोगात्मकसाध्याभावः तदीयत्वावच्छिन्नकपिसंयोगा-
भावस्वरूपप्रतियोगितानिष्ठनिरूपकताकावच्छेदकताश्रयत्वेपि कपिसंयोगा-
भावत्वस्य न क्षतिः। अस्यायमनुगमः। निरूपकताविशिष्टनिरूपकताकावच्छे-
दकताशून्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। निरूपक-
तावैशिष्ट्यं च निरूपकतायां स्वतादात्म्य, स्वविशिष्टहेत्वधिकरणकाली-
नत्व, स्वानिरूपितनिरूप्यत्वानिष्ठ अवच्छेदकतानिरूपित अवच्छेदकतावद्या-

वीयत्वावच्छिन्नसाध्यतावच्छेदकसंबंधनिष्ठसंसर्गतानिरूपकत्वसामानाधिकरण्य, त्रितयसंबंधेन। स्वपदं निरूपकतापरं। हेत्वधिकरणे स्ववैशिष्ट्यं च स्वनिष्ठअवच्छेदकताकप्रतियोगिताकभेदवत्वसंबंधेन ॥ अवच्छेदकता च स्वविशिष्टआधेयतानिरूपिताधिकरणत्वसंबंधावच्छिन्ना ; आधेयतायां स्ववैशिष्ट्यं च स्वनिरूपकधर्मावच्छिन्नत्व, स्वनिरूपितनिरूप्यत्वनिष्ठअवच्छेदकतानिरूपितावच्छेदकतावदभावीयत्वावच्छिन्ननिरूपकताकसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्व, उभयसंबंधेनेति दिक् २५॥

'संबंधांतरावच्छिन्नतत्तत्प्रतियोगितावच्छेदकभेदकूटघटितत्वेन यद्वेत्यादिकल्पस्यैव गुरुत्वा'दिति जागदीशी ॥

ननु प्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वकल्पेपि तद्वह्निप्रतियोगिकसंयोगेन वह्निसाध्यकसद्धेतौ प्रतियोगितावच्छेदकसंबंधेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वाप्रसिद्ध्या अव्याप्तिवारणाय साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसंबंधेन साध्यतावच्छेदकसंबंधावच्छिन्नत्वाविशेषिततत्तत्प्रतियोगितावच्छेदकत्वाभावकूट एव साध्यतावच्छेदके निवेशनीयः। तथा च पूर्वकल्पेपि संबंधांतरावच्छिन्नप्रतियोगितावच्छेदकत्वाभावकूटघटनात् यद्वेत्यादिकल्पे गौरवप्रदर्शनमनुचितमिति चेन्न। तादृशदोषवारणार्थं प्रतियोगितावच्छेदकसंबंधावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपितस्वरूपसंबंधेन प्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावस्य स्वयमग्रे निवेशनीयत्वेन उक्तविवक्षाया अनावश्यकत्वेन पूर्वकल्पे संबंधांतरावच्छिन्नप्रतियोगिताया लक्षणघटकत्वादिति ध्येयम् ॥२६॥

एतद्धटवान् कालांतरीयतद्धटत्वादित्यारभ्य निरुक्तप्रतियोगिताकत्वविशिष्टयत्किंचिद्धेत्वधिकरणानुयोगिकत्वसामान्याभावमपहाय तदुभयसामान्याभावउक्त इत्यंतजागदीशी ॥ अथात्रोभयाभावापेक्षया विशिष्टाभावस्य

लघुशरीरत्वाभावात् कथं तदाशंकनं, एतद्धटवान् कालांतरीयतद्धटत्वादित्यादौ अतिव्याप्तिदोषेण कथं वा तत्खण्डनं। न चोभयाभावप्रतियोगित्वावच्छेदककोटौ उभयत्वस्याधिकस्य निवेशात् तस्य गुरुशरीरत्वमिति वाच्यम्। विशिष्टाभावप्रतियोगितावच्छेदककोटौ यादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्वरूपविशेषणप्रवेशेन साम्यात्। न चोभयाभावप्रतियोगिविधया यादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्वस्य भवन्मतेपि निवेशात् तदंशे उभयमतेपि साम्यमेव, उभयत्वनिवेशेन गौरवं पुनरुभयाभावनिवेशकृन्मते अतिरिच्यत इति वाच्यम्। उभयाभावनिवेशकृन्मते तदीयप्रतियोगितायाः यादृशप्रतियोगितावच्छेदकधर्माव च्छेद्यप्रतियोगिताकत्वत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वत्व उभयत्वावच्छिन्नत्वेनैव निवेशः न तु तदुभयनिष्ठत्वेनापि प्रयोजनाभावादिति। यादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्वनिवेशस्योभयमतसाधारण्याभावात्। न च विशिष्टाभावनिवेशकृन्मतेपि न विशेषणस्य यादृशप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगित्वादेः निवेशः, अपितु प्रतियोगितावच्छेदकताया एव यादृशप्रतियोगितावच्छेदकधर्मावच्छेद्यप्रतियोगिताकत्वत्वावच्छिन्नत्वेन निवेश इति उभयाभावनिवेशकृन्मते उभयत्वनिवेशाधिक्येन गौरवं दुष्परिहारमेवेति वाच्यम्। एवमपि विशिष्टाभावप्रतियोगितावच्छेदकतावच्छेदकसंबंधतया स्वरूपस्वरूपोभयघटितसामानाधिकरण्यस्य निवेशेन तन्निवेशकल्पे लाघवानवाकाशात्। मैवम्। निरुक्तोभयत्वं न संख्यारूपं द्रव्यातिरिक्ते संख्यात्मकद्वित्वानंगीकारात्। किंत्वपेक्षाबुद्धिविशेषविषयत्वमेव तद्वाच्यं। तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वविषयकहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वविषयकबुद्धीयविशेष्यतात्वावच्छिन्नपर्याप्तिसंबंधावच्छिन्नप्रतियोगितावच्छेदकताकाभावः निरुक्तोभयाभावपदेन विवक्षणीयः। स एकविशिष्टापराभावापेक्षया गुरुरेवेति तन्निवेशाशंकाद्युपपत्तेः। न च निरुक्तप्रतियोगिताकत्वव्याप्तिहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्य-

नुयोगिकत्ववृत्तिविषयत्वावच्छिन्नाभावएव निरुक्तोभयाभावः न तु तदुभयविषयकधीविशेष्यत्वावच्छिन्नाभावः तत्र च विशिष्टाभावापेक्षया न गौरवमिति वाच्यम् । तत्रापि विषयत्वस्य अधिकस्य निवेशेन गौरवात् । विशिष्टाभावनिवेशकृन्मते निरुक्तसामानाधिकरण्यसंबंधावच्छिन्नावच्छेदकतायाः प्रवेशेपि तस्य निरुक्तोभयत्वावच्छिन्नाभावशरीरनिविष्टस्वरूपसंबंधावच्छिन्नाधेयतासंबंधावच्छिन्ननिरुक्तप्रतियोगिकत्वादिनिष्ठावच्छेदकताद्वयाधिकशरीरत्वाभावात् । वस्तुतस्तु विषयभेदेन विषयतायाः नानात्वे तदुभयवृत्ति-एकविषयत्वाप्रसिद्ध्या तत्तद्विषयकत्वविशेषितबुद्धीयविशेष्यत्वावच्छिन्नाभावएव निवेशनीय इति तत्र स्फुटतरमेव गौरवमित्यवधेयम् ॥२७॥

प्रमेयत्वावच्छेद्यत्वविशिष्टस्वरूपसंबंधावच्छेद्यत्वाप्रसिद्ध्या प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिरतो विशिष्टाभावमपहाय तादृशोभयाभाव उक्त इति जागदीशी ॥ न च स्वरूपेण प्रमेयस्य व्याप्यवृत्तित्वात् तत्साध्यकस्थले निरुक्तोभयाभावाघटितं हेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमेव व्याप्तिः। तच्च तत्राक्षतमेवेति तत्र यत्संबंधावच्छिन्नत्व यद्धर्मावच्छिन्नत्व उभयाभावसार्थक्याभिधानं न युज्यत इति वाच्यम् । दण्डिमान् दण्डिसंयोगादित्यादौ दण्डित्वादिप्रकारेण दण्ड्यादेर्व्यापकत्वानिर्वाहार्थं हेतुमन्निष्ठाभावीयप्रतियोगितासामान्ये यादृशधर्मावच्छिन्नत्व, यादृशसंबंधावच्छिन्नत्वोभयाभावस्तादृशसंबंधेन तादृशधर्मावच्छिन्नसामानाधिकरण्यस्यैव व्याप्यवृत्तिसाध्यकानुमित्यौपयिकताया वक्ष्यमाणतया तादृशव्याप्तावेकाविशिष्टापराभावानिवेशे स्वरूपेण प्रमेयसाध्यकसद्धेतौ तदप्रसिद्ध्याऽव्याप्तिरत उभयाभावपर्यंतानुधावनमित्यत्रैव तद्ग्रंथतात्पर्यात् । यद्यपि व्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ उभयाभावघटनस्य प्रकृते अप्रक्रांततया तस्येदानीं सार्थक्याभिधानमनुचितं, प्रक्रांताव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ उभयाभावस्य तदनभिधानं च तथा । तथापि व्याप्यवृत्तिप्रमेयादेरव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैय-

धिकरण्याघटितनिरुक्तव्याप्तेर्दुर्ग्रहतया प्रतियोगिवैयाधिकरण्यघटितनिरुक्तोभयाभावघटितापि व्याप्तिरनुमित्युपयोगिनी वाच्या । तथा च स्वरूपेण प्रमेयसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटितनिरुक्तावुभयाभावसार्थक्याभिधानं संगतमेवेति । न च नोपादेयमित्यादिग्रंथेन व्याप्यवृत्तिसाध्यकस्थले प्रतियोगिवैयधिकरण्याघटितव्याप्तेरेवानुमित्यौपयिकत्वाभिधानमसंगतमिति वाच्यम् । व्याप्यवृत्तिसाध्यकपदस्य अव्याप्यवृत्तित्वग्रहाविषयसाध्यकपरत्वेन अव्याप्यवृत्तित्वभ्रमविषयव्याप्यवृत्तिसाध्यकसद्धेतौ प्रतियोगिवैयधिकरण्यघटितव्याप्तेरनुमित्युपयोगित्वेपि क्षत्यभावादिति ॥२८॥

श्लो ॥ जगदीशकृते व्याप्तिसिद्धान्ते रचिता मुदा ।
पत्रिका सङ्गमेशेन सुब्रह्मण्यसहायतः ॥

दुर्मुखिवत्सरे आषाढामायां स्थिरवासरे अस्मद्दैवगुरुप्रसादेन
विद्वदाशीर्वादेन च समाप्तिमगमत् ॥

॥ श्रीकृष्णार्पणमस्तु ॥



Sri Vidya Press, Kumbakonam.